। ८ । ३ । ६३ ॥ सेवासितेत्यत्र सितशब्दात्प्राग् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात् । न्यषेधत्, न्यषेधीत्, न्यषेधिष्यत्॥ **स्थादिष्वभ्यासेन चाभ्यासस्य । ८। । ३ । ६४ ॥** प्राक् सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात्, एषामेव चाभ्यासस्य, न तु सुनोत्यादीनाम् । निषिषेध । निषिषिधतुः ॥ **सेधतेर्गतौ । ८ । ३। । ११३ ॥** गत्यर्थस्य सेधतेः सस्य षत्वं न स्यात् । गङ्गां विसेधति ॥ १० ॥ ( षिधू शास्त्रे माङ्गल्ये च )-शास्त्रं शासनम् ॥ **स्वरतिसूतिसूयतिधूञूदितो वा । ७। । २ । ४४ ॥** स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात् ॥ **झषस्तथोर्धोऽधः । ८ । २ । ४० ॥** झषः परयोस्तथयोर्धः स्यान्न तु दधातेः । जश्त्वम् । सिषेद्ध । सिषेधिथ । सेद्धा । सेधिता । सेत्स्यति । सेधिष्यति । असैत्सीत् ॥ **झलो झलि । ८। । २ । २६ ॥** झलः परस्य सस्य लोपः स्याज्झलि । असैद्धाम्, असैत्सुः । असैत्सीः, असैद्धम्, असैद्ध । असैत्सम्, असैत्स्व, असैत्स्म । पक्षे असेधीत्, असेधिष्टामित्यादि ॥ ॥ ११ ॥ ( खादृ भक्षणे )-ऋकार इत् । खादति । चखाद ॥१२॥ ( खद स्थैर्ये हिंसायां च ) चाद्भक्षणे । स्थैर्ये अकर्मकः । खदति ॥ **अत उपधायाः । ७ । २ । ११६ ॥** उपधाया अतो वृद्धिः स्यात्-ञिति, णिति च, प्रत्यये परे । चखाद ॥ **णलुत्तमो वा । ७ । १ । ९१ ॥** उत्तमो णल्वा णित्स्यात् । चखाद । चखद ॥ **अतो हलादेर्लघोः । ७ । २ । ७ ॥** हलादेर्लघोरकारस्य इडादौ परस्मैपदे परे सिचि वृद्धिर्वा स्यात् । अखादीत् । अखदीत् ॥ १३ ॥ बद स्थैर्ये । ( पवर्गीयादिः ) । बदति । बबाद, बेदतुः । बेदिथ । बबद । अबादीत्, अबदीत् ॥ १४ ॥ ( गद व्यक्तायां वाचि ) गदति ॥ **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च । ८ । ४ । १७ ॥** उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्याद् गदनदादिषु । प्रणिगदति । जगाद । १५ ॥ ( रद विलेखने )-लेखनं भेदनम् । रराद । रेदतुः । १६ ॥ ( णद अव्यक्ते शब्दे ) **णो नः । ६ । १ । ६५ ॥** धातोरादेर्णस्य नः स्यात् ॥ ( **णोपदेशास्त्वनर्द-नाटि-नाथ-नाध्-नन्द्-नक्-नॄ-नृतः** ) । नाटेर्दीर्घोहस्य पर्युदासाद् घटादिर्णोपदेश एव । तवर्गचतुर्थान्तनाधतेर्नॄनन्द्योश्च **केचिण्णोपदेशतामाहुः ॥ उपसर्गादसमासेऽपि णोपदेशस्य । ८ । ४ । १४ ॥** उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि । प्रणदति । प्रणिनदति । १७ ॥ ( अर्द गतौ याचने च ) । ( अतआदेः ) **तस्मान्नुड् द्विहलः । ७ । ४ । ७१ ॥** द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् । आनर्द । आर्दीत् । १८ ॥ ( नर्द गर्द शब्दे ) । णोपदेशत्वाभावान्न णः । प्रनर्दति । १९ ॥ गर्दति । जगर्द । २० ॥ ( तर्द हिंसायाम् )-तर्दति २१ ॥ ( कर्द कुत्सिते शब्दे )-कुत्सिते कौक्षे । कर्दति । २२ ॥ ( खर्द दन्दशूके )-दंशहिंसादिरूपायां दन्दशूकक्रियायामित्यर्थः । खर्दति । चखर्द । २३ ॥ ( अति अदि बन्धने )

अन्तति आनन्त। २४ ॥ अन्दति। आनन्द। २५ ॥ ( इदि, परमैश्वर्ये ) इन्दति। इन्दाञ्चकार ॥ २६ ॥ ( बिदि, अवयवे )—पवर्गतृतीयादिः। बिन्दति। अवयवं करोतीत्यर्थः। **भिदीति पाठान्तरम्** ॥ २७ ॥ ( गडि, वदनैकदेशे )—गण्डति। अन्तत्यादयः **पश्चैते न तिङ्विषया इति काश्यपः। अन्ये तु तिङमपीच्छन्ति**।२८॥ ( णिदि, कुत्सायाम् )—निन्दति। प्रणिन्दति। २९॥(टु—नदि, समृद्धौ )॥ **आदिर्ञिटुडवः। १। ३। ५॥** उपदेशे धातोराद्या एते इतः स्युः। नन्दति। इदित्वान्नलोपो ना। नन्द्यात् ॥ ३० ॥ ( चदि, आह्लादे ) चचन्द। ३१ ॥ ( त्रदि, चेष्टायाम्)—तत्रन्द। ३२ ॥ ( कदि, क्रदि, क्लदि, आह्वाने रोदने च ) चकन्द। ३३ ॥ चक्रन्द। ३४ ॥चक्लन्द। ३५ ॥ ( क्लिदि, परिदेवने ) चिक्लिन्द। ३६ ॥ ( शुन्ध शुद्धौ )—शुशुन्ध।नलोपः-शुध्यात्। ३७॥ **अथ कवर्गीयान्ता अनुदात्तेतो द्विचत्वारिंशत्** ( शीकृ, सेचने ) तालव्यादिः। **दन्त्यादिरित्येके**। शीकते। शिशीके। १ ॥( लोकृ, दर्शने ) लोकते लुलोके। २ ॥ ( श्लोकृ, संघाते )—सङ्घातो ग्रन्थः। स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा। **आद्ये**—अकर्मकः द्वितीये—सकर्मकः। श्लोकते। ३ ॥ ( द्रेकृ, ध्रेकृ, शब्दोत्साहयोः ) उत्साहो वृद्धिरौद्धत्यं च। दिद्रेके। ४। दिध्रेके। ५ ॥ ( रेकृ, शंकायाम् ) रेकते। ६ ॥ ( सेकृ ७, स्रेकृ ८, स्रकि ९ श्रकि १०, श्लकि ११, गतौ)॥ त्रयो दन्त्यादयो द्वौ तालव्यादी। अषोपदेशत्वान्न षः-सिसेके ( शकि शंकायाम् ) शंकते, शशंके। १२ ॥ ( अकि, लक्षणे ) अंकते। आनंके। १३ ॥ ( वकि कौटिल्ये ) वंकते। १४ ॥ ( मकि, मण्डने )—मंकते। १५ ॥ ( कक, लौल्ये )—लौल्यं गर्वश्चापल्यं च। ककते। चकके। १६ ॥ ( कुक वृक आदाने ) कोकते। चुकुके। १७ ॥ वर्कते। ववृके, ॥१८॥ ( **ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन** )॥(चक,-तृप्तौ मतिघाते च )—चकते। चेके। १९ ॥ ( ककि २०, वकि, २१ श्वकि २२, त्रकि २३, ढौकृ २४, त्रौकृ २५, ष्वष्क २६, वस्क २७, मस्क, २८, टिकृ २९, टीकृ ३०, तिकृ ३१, तीकृ ३२, रघि ३३, लघि ३४, गत्यर्थाः ) कंकते। डुढौके। तुत्रौके ॥ ( **सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः** ) ष्वष्कते। षष्वष्के। **अत्र तृतीयो दन्त्यादिरित्येके** ॥ ( लघि, भोजननिवृत्तावपि )। ३५ ॥ ( अघि ३६, वघि ३७, मघि ३८, गत्याक्षेपे ) आक्षेपो निन्दा। गतौ गत्यारम्भे चेत्यन्ये। अंघते। आनंघे। वंघते। मंघते ॥ ( मघि, कैतवे च )। ३८ ॥ राघृ ३९, लाघृ ४०, द्राघृ ४१, सामर्थ्ये )—राघते। लाघते ॥ **ध्राघृ इत्यपि केचित्** ॥ ( द्राघृ, आयामे च )—आयामो दैर्घ्यम्। द्राघते। ४१ ॥ ( श्लाघृ, कत्थने,) श्लाघते ॥ ४२ ॥ **अथ परस्मैपदिनः पञ्चाशत्**—( फक्क, नीचैर्गतौ )—नीचैर्गतिर्मन्दगमनमसद्व्यवहारश्च। फक्कति। पफक्क। १ ॥( तक, हसने )—तकति। २ ॥(तकि कृच्छ्रजीवने ) तंकति। ३ ॥ ( बुक्क, भषणे ) भषणं श्वरवः। बुक्कति। ४ ॥ ( कखे हसने )—ध्वनि कखति ५ ॥ ( ओखृ ६, राखृ ७, लाखृ ८, द्राखृ ९, ध्राखृ १०, शोषणालमर्थयोः )—ओखति। ओखाञ्चकार ॥ ( शाखृ ११, श्लाखृ १२, व्याप्तौ )

शाखति । (उख १३, उखि १४, वख १५, वखि १६, मख १७, मखि १८, णख, १९, णखि २०, रख २१, रखि २२, लख २३, लखि २४, इख २५, इखि २६ ईखि २७, वल्ग २८, रगि १९, लगि ३०, अगि ३१, वगि ३२, मगि ३३, तगि ३४, त्वगि ३५, श्रगि ३६, श्लगि ३७, इगि ३८, रिगि ३९, लिगि ४०, गत्यर्थाः )—कवर्गद्वितीयान्ताः पञ्चदश । तृतीयान्तास्त्रयोदश । इह खान्तेषु ( रिख ४१ त्रख ४२ त्रिखि ४३ शिखि ४४ ) इत्यपि चतुरः केचित्पठन्ति ॥ **अभ्यासस्याऽसवर्णे । ६ । ४ । ७८ ॥** अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि परे। उवोख॥ **सन्निपातपरिभाषया** इजादेरित्याम्न—ऊखतुः ऊखुः । इह सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाद्ध्रस्वः माप्तो न भवति । **सकृत्प्रवृत्तत्वात्** । आङ्गत्वाद्धि **पर्जन्यवल्लक्षणप्रवृत्त्या** ह्रस्वे कृते ततो दीर्घः॥ **( वार्णादाङ्गं बलीयः )** इति न्यायात्परत्वाच्च ॥ उङ्खति । ववखतुः । वङ्खति । मेखतुः । ( त्वगि कम्पने च ) ( युगि ४५ जुगि ४६ वुगि ४७ वर्जने ) युङ्गति ॥(घघ हसने) घघति । जघाघ । ४८ ॥ ( मघि मण्डने )—मंघति । ४९ ॥ ( शिघि आघ्राणे ) शिंघति । ५० ॥ **अथ चवर्गीयान्ताः अनुदात्तेत एकविंशतिः**—( वर्च दीप्तौ )—वर्चते।१॥ ( षच सेचने सेवने च )—सचते । सेचे । सचिता ॥ ( लोचृदर्शने, ) लोचते । लुलोचे । ३ ॥ ( शच व्यक्तायां वाचि ) शेचे । ४ ॥ (श्वच, श्वचि, गतौ )—श्वचते । ५ ॥ श्वञ्चते। ६ ॥ ( कच बन्धने)—कचते ।७॥ ( कचि ८, काचि ९, दीप्तिबंधनयोः)—चकञ्चे ।चकाञ्चे। ( मच १०, मुचि।११, कल्कने)कल्कनं दम्भः शाठ्यं च । कत्थनमित्यन्ये । मेचे।मुमुञ्चे ( मचि, धारणोच्छ्रायपूजनेषु )—ममञ्चे । १२ ॥ ( पचि व्यक्तीकरणे )—पञ्चते । १३॥(ष्टुच प्रसादे ) स्तोचते । तुष्टुचे । १४ ॥ ( ऋज, गतिस्थानार्जनोपार्जनेषु )—अर्जते । नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते । तेन द्विहल्त्वान्नुट्—आनृजे ॥ १५॥(ऋजि१६, भृजी १७, भर्जने ) ऋञ्जते । उपसर्गादृतीति वृद्धिः । मार्ञ्जते । ऋञ्जाञ्चक्रे । आर्ञ्जिष्ट । भर्जते । बभृजे।अभर्जिष्ट॥(एजृ १८ भेजृ१९ भ्राजृ २० दीप्तौ)एजाञ्चक्रे।२०॥( ईजगतिकुत्सनयोः) ईजाञ्चक्रे॥२१॥**अथ द्विसप्ततिर्व्रज्यन्ताः परस्मैपदिनः**॥ ( शुच, शोके )—शोचति ॥१॥ ( कुच, शब्देतारे )—कोचति ॥२॥( कुञ्च ३, क्रुञ्च ४, कौटिल्याल्पीभावयोः )—अनिदितामिति नलोपः । कुच्यात् । क्रुच्यात् ॥ ( लुञ्च, अपनयने ) लुच्यात् ॥ ५ ॥ ( अञ्चु, गतिपूजनयोः ) अच्यात् । गतौ नलोपः । पूजायां तु अञ्च्यात् । ॥६॥ ( वञ्चु ७. चञ्चु ८, तञ्चु ९, त्वञ्चु १०, म्रुञ्चु ११, म्लुञ्च १२, म्रुचु १३, म्लुचु१४ ग्रुचु १५, ग्लुचु १६, गत्यर्थाः ) ॥ वच्यात् । चच्यात् । तच्यात् । त्वच्यात् । अम्रुञ्चीत् । अम्लुञ्चीत् ॥ **जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च । ३ । १ । ५८ ॥** एभ्यश्च्लेरङ् वा स्यात् । अम्रुचत् । अम्रोचीत् । अम्लुचत् । अम्लोचीत् । ग्रुचु १७, ग्लुचु १८. कुजु १९, खुजु २०, स्तेयकरणे॥जग्रोच । अग्रुचत् । अग्रोचीत् ।जुग्लोच । अग्लुचत् । अग्लोचीत् । अकोजीत् । अखोजीत् ॥ ( ग्लुञ्चु२१ षस्ज २२ गतौ ॥

अङ् । अग्लुचत् । अग्लुञ्चीत् । २१ ॥ सस्य श्चुत्वेन शः । तस्य जश्त्वेन जः।सज्जति। **अयमात्मनेपद्यपि** । सज्जते । २२ ॥ ( गुजि, अव्यक्ते शब्दे ) गुञ्जति । गुञ्ज्यात् । २३ ॥ ( अर्च, पूजायाम् )—आनर्च । २४ ॥ ( म्लेच्छ, अव्यक्ते शब्दे )—अस्फुटेऽपशब्दे चेत्यर्थः । म्लेच्छति । मिम्लेच्छ । २५ ॥ ( लच्छ २६, लाच्छि २७,लक्षणे )—ललच्छ। ललाञ्च्छ ॥ ( वाछि, इच्छायाम् )—वाञ्छति । २८ ॥ ( आछि, आयामे )—आञ्छति ॥ (अत आदेः)—इत्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थम् । तेन दीर्घाभावान्न नुट् । आञ्छ । तपरकरणं मुखसुखार्थमिति **मते** तु नुट्—आनाञ्छ॥२९॥ (ह्रीछ, लज्जायाम् ) जिह्रीच्छ ।३०॥(हुर्छा,कौटिल्ये)—कौटिल्यमपसरणमिति **मैत्रेयः**।(उपधायां च) इति दीर्घः। हूर्च्छति।३१॥(मुर्च्छा,मोहसमुच्छ्राययोः)—मूर्च्छति।३२ ॥ (स्फुर्च्छा, विस्तृतौ)स्फूर्छति । ।३३॥(युच्छ, प्रमादे)—युच्छति।३४॥(उछि उञ्छे)—उञ्छःकणश आदानं कणिशाद्यर्जनं शिलमिति **यादवः** । उञ्छति । उञ्छाञ्चकार । ३५ ॥ ( उच्छी विवासे )—विवासः समाप्तिः । प्रायेणायं विपूर्वः । व्युच्छति । ३६ ॥ ( ध्रज ३७, ध्रजि ३८, धृज ३९, धृजि ४०,ध्वज ४१,ध्वजि ४२,गतौ )-ध्रजति । ध्रञ्जति । ध्वजति । ध्वञ्जति ॥(कूज,अव्यक्ते शब्दे )—चुकूज । ४३ ॥ ( अर्ज ४४,षर्ज ४५,अर्जने )अर्जति । आनर्ज ॥ सर्जति।ससर्ज॥ ( गर्ज, शब्दे )--गर्जति । ४६ ॥ ( तर्ज. भर्त्सने )--तर्जति । ४७ ॥ ( कर्ज, व्यथने )— चकर्ज । ४८ ॥ ( खर्ज, पूजने च )—चखर्ज । ४९ ॥ ( अज, गतिक्षेपणयोः) अजति ॥ **अजेर्व्यघञपोः । २ । ४ । ५६ ॥** अजेर्वी इत्ययमादेशः स्यादार्धधातुकविषये, घञमपं च वर्जयित्वा॥(**वलादावार्धधातुके वेष्यते**) ॥ विवाय, विव्यतुः, विव्युः । अत्र वकारस्य हल्परत्वाद् ( उपधायां च )—इति दीर्घे प्राप्तेऽचः परस्मिन्निति स्थानिवद्भावेनाच्परत्वम् । **न च** न पदान्तेति निषेधः। **(स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवद्)**—इत्युक्तेः।थलि एकाच इतीण् निषेधे प्राप्ते॥**कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि।७।२।१३॥**एभ्यो लिट इण्न स्यात् । क्रादीनां चतुर्णां ग्रहणं नियमार्थं प्रकृत्याश्रयः, प्रत्ययाश्रयो वा, यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव,नान्येभ्य इति।ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य, वमादिषु क्रादिनियमप्रापितस्य च इटो निषेधार्थम्॥ **अचस्तास्वत्थल्यनिटो नित्यम् । ७ । २ । ६१॥** उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात् ॥ **उपदेशेऽत्वतः । ७ । २ । ६२॥** उपदेशेऽकारवांस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात् ॥ **ऋतो भारद्वाजस्य । ७ । २ । ६३ ॥** तासौ नित्यानिटः ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन । तेनान्यस्य स्यादेव । **अयमत्र संग्रहः** ( अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् । ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ) ॥ १ ॥ **न च** स्तुद्रादीनामपि थलि विकल्पः शङ्क्यः । अचस्तास्वदिति, उपदेशेऽत्वत इति च, योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्तकः । **अनन्तरस्येति** न्यायात् । विवयिथ, विवेथ,

आजिथ । विव्यथुः, विव्य । विवाय, विवय, विव्यिव, विव्यिम । वेता, अजिता । वेष्यति, अजिष्यति । अजतु । आजत् । अजेत् । वीयात् ॥ **सिचि वृद्धिः परस्मैपदेषु।७।२।१॥** इगन्ताङ्गस्य वृद्धिः स्यात्परस्मैपदेपरे सिचि । अवैषीत्, आजीत्।अवेष्यत्, आजिष्यत् ।५०॥ (तेज,पालने)–तेजति।५१॥(खज, मंथे) खजति ।५२॥ (खजि, गतिवैकल्ये )–खञ्जति । ५३ ॥ ( एजृ, कम्पने )–एजाञ्चकार ॥ ५४ ॥ (टुओस्फूर्जा, वज्रनिर्घोषे)स्फूर्जति । पुस्फूर्ज ॥ ५५ ॥ (क्षि, क्षये ) अकर्मकः । अन्तर्भाविण्यर्थस्तु सकर्मकः। क्षयति । चिक्षाय, चिक्षियतुः, चिक्षियुः । चिक्षयिथ, चिक्षेथ । चिक्षियिव, चिक्षियिम । क्षेता॥ **अकृत्सार्वधातुकयोर्दीर्घः। ७ । ४ । २५ ॥** अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये परे, न तु कृत्सार्वधातुकयोः । क्षीयात् । अक्षैषीत् । ५६॥(क्षीज, अव्यक्ते शब्दे)- कूजिना सहायं पठितुं युक्तः ॥ चिक्षीज । ५७ ॥ (लज ५८,लजि ५९, भर्जने )–(लाज ६०, लाजि ६१, भर्त्सने च )–(जज ६२,जजि ६३,युद्धे ) ॥ ( तुज,हिंसायाम् )–तोजति तुतोज । ६४ ॥ ( तुजि,पालने )–६५ ॥ ( गज ६६, गजि ६७, गृज ६८, गृजि ६९, मुज७०, मुजि ७१,शब्दार्थाः ) । (गज,मदने च ) ७२ ॥ ( वज ७३, व्रज ७४,गतौ )॥ वदव्रजेति वृद्धिः–अव्राजीत् ॥ **अथ टवर्गीयान्ताः शाड्यन्ता अनुदात्तेतः षट्त्रिंशत्**–(अट्ट ।१॥ अतिक्रमहिंसयोः )–दोपधोऽयम् ॥ तोपध इत्येके ॥ अट्टते। आनट्टे (वेष्ट । २ ॥ वेष्टने)–विवेष्टे ( चेष्ट । ३ ॥ चेष्टायाम् ) अचेष्टिष्ट ॥ ( गोष्ट ४ लोष्ट ५ सङ्घाते ) जुगोष्टे ॥ लुलोष्टे ॥ ( घट्ट ६ चलने )–जघट्टे ( स्फुट ७ विकसने) स्फोटते । पुस्फुटे (अठि ८ गतौ )–अण्ठते । आनण्ठे ( वठि ९ एकचर्यायाम् )–वण्ठते। ववण्ठे । ( मठि १० कठि ११ शोके ) शोक इह आध्यानम् । मण्ठते । कण्ठते। (मुठि १२ पालने)–मुण्ठते । ( हेठ १३ विबाधायाम्)–बाधा शाठ्यम् । जिहेठे । (एठ १४ च )–एठाञ्चक्रे । ( हिडि १५ गत्यनादरयोः )–हिण्डते । जिहिण्डे । ( हुडि १६ सङ्घाते )–जुहुण्डे ।१६॥ (कुडि १७ दाहे )–चुकुण्डे । ( वडि १८ विभाजने) मडि १९ च ववण्डे॥ (भडि २० परिभाषणे)–परिहासः सनिन्दोपालम्भश्च **परिभाषणम्**॥ बभण्डे । ( पिडि २१ सङ्घाते )–पिपिण्डे । ( मुडि २२ मार्जने **मार्जनं** शुद्धिर्न्यग्भावश्च । मुण्डते । तुडि २३ तोडने–**तोडनं** दारणं हिंसनं च । तुण्डते। ( हुडि २४ वरणे )–**वरणं** स्वीकारः । हरण इत्येके । हुण्डते।(चडि २५ कोपे)–चण्डते ( शडि २६ रुजायां सङ्घाते च ) शण्डते । ( तडि २७ ताडने )–तण्डते । ( पडि २८ गतौ )–पण्डते।(कडि २९ मदे )–कण्डते । ( खडि ३० मन्थे ) हेठृ ३१ होडृ ३२ अनादरे । जिहेडे जुहोडे ॥ ( बाडृ ३३ आप्लाव्ये )–बशादिः । **आप्लाव्य** माप्लवः। बाडते । ( द्राडृ ३४ ध्राडृ ३५ विशरणे ) द्राडते ध्राडते ॥ ( शाडृ ३६ श्लाघायाम्)–शाडते ॥ **अथ आटवर्गीयान्तसमाप्तेः परस्मैपदिनः**–(शौटृ १ गर्वे)

शौटति। शुशौट ॥ (यौटृक् २ बन्धे)-यौटति ॥ म्लेट्ट ३, म्लेड्ड ४ उन्मादे। द्वितीयो डान्तः। टान्तमध्ये पाठस्त्वर्थसाम्यान्नाथतिवत्। म्लेटति। म्लेडति। (कटे ५ वर्षावरणयोः)। (चटे ६ इत्येके) चकाट। सिचि अतो हलादेरिति वृद्धौ प्राप्तायाम् ॥ **ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्** ।७।२।५। हमयान्तस्य, क्षणादेर्ण्यन्तस्य श्वयतेरेदिताश्च वृद्धिर्न स्यादिडादौ सिचि। अकटीत् ॥ (अट ७ पट ८ गतौ) आट, आटतुः, आटुः। पपाट, पेटतुः, पेटुः॥ (रट ९ परिभाषणे)-रराट॥ (लट १० बाल्ये) ललाट ॥ (शट ११ रुजाविशरणगत्यवसादनेषु)-शशाट ॥ (वट १२ वेष्टने)-ववाट, ववटतुः, ववटुः। ववटिथ ॥ (किट १३ खिट १४ त्रासे)-केटति। खेटति ॥ (शिट १५ षिट १६ अनादरे)-शेटति। शिशेट सेटति। सिषेट ॥ (जट १७ झट १८ संघाते) ॥ (भट १९ भृतौ)॥ (तट २० उच्छ्राये)-॥ खट २१ काङ्क्षायाम्)॥ (णट २२ नृत्तौ) ॥ (पिट २३ शब्दसङ्घातयोः) ॥ (हट २४ दीप्तौ) ॥ (षट २५ अवयवे) ॥ (लुट २६ विलोडने)॥ डान्तोऽयमित्येके।२७॥ (चिट २८ परप्रेष्ये)-(विट २९ शब्दे) ॥ (बिट ३० आक्रोशे) बशादिः ॥ हिटेत्येके। (इट ३१ किट ३२ कटी ३३-गतौ) एटति। केटति। कटति। ईकारः श्वीदितो निष्ठायामितीण्निषेधार्थः ॥ केचित्तु इदितं मत्वा नुमि कृते कण्टतीत्यादि वदन्ति। अन्ते च-इ ३४, ई ३५, इति प्रश्लिष्य-अयति, इयाय, ईयतुः, ईयुः। इययिथ, इयेथ। इयाय, इयय। दीर्घस्य त्विजादेरित्यामि-अयाञ्चकारेत्यादि उदाहरन्ति ॥ (मडि ३६ भूषायाम्) ॥ (कुडि ३७ वैकल्ये)-कुण्डति॥ कुण्डत इति तु दाहे गतम् ॥ (मुड ३८ प्रुड ३९ मर्दने)। (चुडि ४० अल्पीभावे)॥ (मुडि ४१ खण्डने)-मुण्डति॥ (पुडि चेत्येके)-पुण्डति ४२॥ (रुटि ४३ लुटि ४४ स्तेये)-रुण्टति। लुण्टति ॥ (रुठि ४५ लुठि ४६ इत्येके) ॥ (रुडि ४७ लुडीत्यपरे। ४८ ॥ (स्फुटिर् ४९ विशरणे)-इरित्त्वादङ्वा। अस्फुटत्, अस्फोटीत् ॥ (स्फुटीत्यपि केचित् ५०) इदित्त्वान्नुम्-स्फुण्टति। (पठ ५१ व्यक्तायां वाचि)-पेठतुः। पेठिथ। अपठीत्, अपाठीत्, ॥ (वठ ५२ स्थौल्ये)-ववठथुः। ववठिथ ॥ (मठ ५३ मदनिवासयोः) ॥ (कठ ५४ कृच्छ्रजीवने) ॥ (रट ५५ परिभाषणे) ॥ (रठेत्येके) ५६॥ (हठ ५७ प्लुतिशठत्वयोः)-बलात्कारे इत्येके। हठति। जहाठ ॥ (रुठ ५८ लुठ ५९ उठ ६० उपघाते। ओठति ॥) ऊठेत्येके)-ऊठति। ऊठाञ्चकार। ६१ (पिठ ६२ हिंसासंक्लेशनयोः)॥ (शठ ६३ कैतवे च) ॥ (शुठ ६४ प्रतिघाते)-शोठति ॥ (शुठीति ६५ स्वामी)-शुण्ठति ॥ (कुठि च) कुण्ठति ६६ ॥ (लुठि ६७ आलस्ये प्रतिघाते च ॥ (शुठि ६८ शोषणे) (रुठि ६९ लुठि ७० गतौ) ॥ (चुड्ड ७१ भावकरणे)-भावकरणमभिप्रायसूचनम्। चुड्डति। चुचुड्ड (अड्ड ७२ अभियोगे)-अड्डति। आनड्ड ॥ (कड्ड ७३ कार्कश्ये)-कड्डति। चुड्डादयस्त्रयो दोपधाः। तेन क्विपि चुत्, अत्, कत्-इत्यादि ॥ (क्रीड्ट ७४ विहारे)

चिक्रीड ॥ ( तुडृ ७५ तोडने ) । तोडति । तुतोड ॥ ( तूड ७६ इत्येके ) ( हुडृ ७७ हूडृ ७८ होडृ ७९ गतौ )—हुड्यात् । हूड्यात् ।होड्यात् ॥ ( रौडृ ८० अनादरे ) ( रोडृ ८१ लोडृ ८२ उन्मादे ) ॥ ( अड ८३ उद्यमे )—अडति । आड, आडतुः, आडुः ॥ ( लड ८४ विलासे ) लडति ॥ डलयोर्ललयोश्चैकत्वस्मरणाल्ललतीति **स्वाम्यादयः** ॥ ( कड ८५ मदे )—कडति ॥ ( कडि ८६ **इत्येके** ) । कण्डति ॥ ( गडि ८७ वदनैकदेशे गण्डति ॥ **इति टवर्गीयान्ताः** ॥ **अथ पवर्गीयान्ताः आनुदात्तेतः स्तोभत्यन्ताश्चतुस्त्रिंशत्**—( तिपृ १ तेपृ २ ष्टिपृ ३ ष्टेपृ ४ क्षरणार्थाः )—आद्योऽनुदात्तः ॥ **क्षीरस्वामी** त्वयं सेडिति **बभ्राम** ॥ तेपते । तितिपे । क्रादिनियमादिट्—तितिपिषे । तेप्ता । तेप्स्यते ॥ **लिङ्सिचावात्मनेपदेषु । १ । २ । ११ ॥** इक्समीपाद्धलः परौ झलादी लिङ्सिचौ आत्मनेपदपरः सिच्चेत्येतौ कितौ स्तः । कित्त्वान्न गुणः—तिप्सीष्ट, तिप्सीयास्ताम्, तिप्सीरन् । लुङि–( झलो झलि )—इति सलोपः । अतिप्त, अतिप्साताम्, अतिप्सत ॥ तेपते । तितेपे ॥ तिष्टिपे, तिष्टिपाते, तिष्टिपिरे ॥ तिष्टेपे, तिष्टेपाते, तिष्टेपिरे । तेपृ **कम्पने च** २ ॥ ( ग्लेपृ ५ दैन्ये )—ग्लेपते ॥ ( टुवेपृ ६ कम्पने ) वेपते ॥ केपृ ७ गेपृ ८ ग्लेपृ ५ च (चात्कम्पने गतौ च) । सूत्रविभागादिति **स्वामी । मैत्रेयस्तु** चकारमन्तरेण पठित्वा कम्पने इत्यपेक्षत **इत्याह** ॥ ग्लेपेरर्थभेदात्पुनः पाठः ॥ ( मेपृ ९ रेपृ १० लेपृ ११ गतौ ) ॥ ( त्रपूष् १२ लज्जायाम् )—त्रपते ॥ **तॄफलभजत्रपश्च । ६ । ४ । १२२ ॥** एषामत एकारोऽभ्यासलोपश्च स्यात्किति लिटि, सेटि थलि च । त्रेपे, त्रेपाते, त्रेपिरे । ऊदित्त्वादिड्वा—त्रपिता, त्रप्ता । त्रपिषीष्ट, त्रप्सीष्ट ॥ ( कपि १३ चलने )—कम्पते । चकम्पे ॥ ( रबि १४ लबि १५ अबि १६ शब्दे )—ररम्बे । ललम्बे । आनम्बे ॥ लबि **अवस्रंसने च** ॥ (कबृ १७ वर्णे )—चकबे ॥ (क्लीबृ १८ अधाष्टर्ये—चिक्लीबे ॥ ( क्षीबृ १९ मदे ) क्षीबते ॥ ( शीभृ २० कत्थने )—शीभते ॥ ( चीभृ च ) २१ ॥ ( रेभृ २२ शब्दे ) रिरेभे ॥ ( अभि २३ रभी २४ **क्वचित्पठ्येते** )—अम्भते । रम्भते ॥ (ष्टभि २५ स्कभि २६ प्रतिबन्धे )—स्थम्भते । उत्तम्भते—उदः स्थास्तम्भोरिति पूर्वसवर्णः । विस्तम्भते । (स्तम्भे ) इति षत्वं तु न भवति । सुविधौ निर्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात् । तद्बीजं तु उदः स्थास्तम्भोरिति पवर्गीयोपधपाठः, स्तन्भेरिति तवर्गीयोपधपाठश्चेति **माधवः । केचिदस्य** टकार औपदेशिक **इत्याहुः** ॥ तन्मते—टष्टम्भे २७ ॥ ( जभि २८ जृभि २९ गात्रविनामे ॥ **रधिजभोरचि । ७ । १ । ६१ ॥** एतयोर्नुमागमः स्यादचि । जम्भते । जजम्भे । जम्भिता । अजम्भिष्ट ॥ जृम्भते । जजृम्भे ॥ शल्भ ३० कत्थने )—शशल्भे ॥ ( वल्भ ३१ भोजने)—दन्तोष्ठ्यादिः । ववल्भे ॥ ( गल्भ ३२ धाष्टर्ये) गल्भते ॥ (श्रम्भु ३३ प्रमादे )—तालव्यादिः ॥ **दन्त्यादिश्च ३४** ॥ श्रम्भते स्रम्भते ॥ ( ष्टुभु ३५ स्तम्भे )—स्तोभते । विष्टोभते । तुष्टुभे । व्यष्टोभिष्ट ॥ **अथ पर-**

स्मैपदिनः–(गुपू १ रक्षणे) ॥ **गुपूधूपविच्छिपणिपनिभ्यः आयः । ३ । १।२८॥** एभ्य आयप्रत्ययः स्यात्स्वार्थे । पुगन्तेति गुणः ॥ **सनाद्यन्ता धातवः ।३।१। ३२॥** सनादयः क्रमेर्णिङन्ताः प्रत्यया अन्ते येषां, ते धातुसंज्ञाः स्युः । धातुत्वाल्लडादयः–गोपायति ॥ **आयादय आर्धधातुकेवा । ३ । १ । ३१** ॥ आर्धधातुकविवक्षायामायादयो वा स्युः ॥ **कास्प्रत्ययादाममन्त्रे लिटि । ३ । १ ।३५॥** कासृधातोः प्रत्ययान्तेभ्यश्चाऽऽम् स्याल्लिटि, न तु मन्त्रे ॥ ( कास्यनेकाज्ग्रहणं कर्तव्यम् ॥ सूत्रे प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमित्यर्थः ॥ **आर्धधातुके । ६ । ४ । ४६ ॥** इत्यधिकृत्य ॥ **अतो लोपः । ६ । ४ । ४८** ॥ आर्धधातुकोपदेशकाले यदकारान्तं तस्याकारस्य लोपः स्यादार्धधातुके परे। गोपायाञ्चकार । गोपायाम्बभूव । गोपायामास। जुगोप, जुगुपतुः । ऊदित्त्वाद्वेट्–जुगोपिथ, जुगोप्थ । गोपायिता, गोपिता, गोप्ता । गोपाय्यात्, गुप्यात् । अगोपायीत्, अगोपीत्, अगौप्सीत् ॥ ( धूप २ सन्तापे )–धूपायति । धूपायाञ्चकार, दुधूप । धूपायितासि, धूपितासि ॥ ( जप ३ जल्प ४ व्यक्तायां वाचि ) ॥ ( जप ४ मानसे च ) ॥ ( चप ५ सांत्वने ) ॥ ( षप ६ समवाये )–समवायः सम्बन्धः, सम्यगवबोधो वा । सपति ॥ ( रप ७ लप ८ व्यक्तायां वाचि )– ( चुप ९ मन्दायां गतौ )–चोपति । चुचोप । चोपिता ॥ ( तुप १० तुम्प ११ त्रुप १२ त्रुम्प १३ तुफ १४ तुम्फ १५ त्रुफ १६ त्रुम्फ १७ हिंसार्थाः ) तोपति । तुतोप । तुम्पति । तुतुम्प, तुतुम्पतुःसंयोगात्परस्य लिटः कित्वाभावान्नलोपो न । क्विदा शिषीति कित्त्वान्नलोपः–तुप्यात्।(**प्राचुम्पतौ गवि कर्तरि इति** पारस्करादिगणे पाठा त्सुट् प्रस्तुम्पति गौः । श्तिपा निर्देशाद्यङ्लुकि न–प्रतोतुम्पीति । त्रोपति । त्रुम्पति । तोफति । तुम्फति । त्रोफति । त्रुम्फति । इहाद्यौ द्वौ पञ्चमषष्ठौ च नीरेफाः । अन्ये सरेफाः । आद्याश्चत्वारः प्रथमान्ताः । ततो द्वितीयान्ताः । अष्टावप्युकारवन्तः॥(पर्प १८ रफ १९ रफि २० अर्ब २१ पर्ब २२ लर्ब २३ बर्ब २४ मर्ब २५ कर्ब २६ खर्ब २७ गर्ब २८ शर्ब २९ षर्ब ३० चर्ब ३१ गतौ )–आद्यः प्रथमान्तः । ततो द्वौ द्वितीयान्तौ तत एकादश तृतीयान्ताः । द्वितीयतृतीयौ मुक्त्वा सर्वे रोपधाः । पर्पति । पपर्प । रफति । रम्फति । अर्बति । आनर्ब । पर्बति । लर्बति । बर्बति–पवर्गीयादिरयम् । मर्बति । कर्बति । खर्बति । गर्बति । शर्बति । सर्बति चर्बति ॥ (कुम्बि ३२ आच्छादने ) कुम्बति। ( लुबि ३३ तुबि ३४ अर्दने )–लुम्बति । तुम्बति ॥ ( चुबि ३५ वक्त्रसंयोगे ) चुम्बति ॥ षृभु ३६ षृम्भु ३७ हिंसार्थौ )–सर्भति । ससर्भ । सर्भिता । सृम्भाति । ससृम्भ। सृम्भ्यात् ॥ ( षिभु ३८ षिम्भु ३९ **इत्येके** )–सेभति । सिम्भति ॥ ( शुभ ४० शुम्भ ४१ भाषणे )–भासने **इत्येके** हिंसायामित्यन्ये ॥ ॥ **अथानुनासिकान्ताः कम्यन्ता अनुदात्तेतो दश**–( घिणि १ घुणि २ घृणि ३ ग्रहणे )॥ नुम् णुत्वम्–घिण्णते । जिघिण्णे ॥ घुण्णते । जुघुण्णे ॥ घृण्णते जघृण्णे ॥ ( घुण ४ घूर्ण ५ भ्रमणे )–घोणते । घूर्णते । इमौ–( **तुदादौ** ) परस्मैपदिनौ ॥ ( पण ६ व्यवहारे स्तुतौ च ) ॥ ( पन ७ च ) । स्तुतावित्येव सम्बध्यते । पृथङ्निर्देशात् । पनि

**नासाहचर्यात्**पणेरपि स्तुतावेवायप्रत्ययः । व्यवहारे तु पणते, पेणे, पणितेत्यादि । स्तुतावनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदम्—पणायति। पणायाञ्चकार। पेणे । पणायितासि, पणितासे । पणाय्यात्, पणिषीष्ट । पनायति । पनायाञ्चकार, पेने। ( भाम ८ क्रोधे )—भामते । बभामे ॥ ( क्षमूष् ९ सहने ) क्षमते । चक्षमिषे । चक्षंसे । चक्षमिध्वे । चक्षमिवहे ॥ **म्वोश्च । ८ । २ । ६५ ॥** मान्तस्य धातोर्मस्य नकारादेशः स्यान्मकारे, वकारेच परे । णत्वम्—चक्षण्वहे । चक्षमिमहे, चक्षण्महे । क्षमिष्यते, क्षंस्यते । क्षमेत । आशिषि--क्षमिषीष्ट, क्षंसीष्ट । अक्षमिष्ट, अक्षंस्त । ( कमु१०कान्तौ )—**कान्तिरिच्छा** ॥ **कमेर्णिङ् । ३ । १ । ३० ॥** कमेर्णिङ् स्यात्स्वार्थे । ङित्वात्तङ्—कामयते ॥ **अयामन्ताऽऽल्वाय्येत्न्विष्णुषु । ६ । ४ । ५५ ॥** आम्, अन्त, आलु आय्य, इत्नु, इष्णु. एषु णेरयादेशः स्यात् । वक्ष्यमाणलोपापवादः । कामयाञ्चक्रे । ( आयादय आर्द्धधातुके वा )—चकमे । कामयिता। कमिता । कामयिष्यते, कमिष्यते ॥ **णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् । ३ । १ । ४८॥** ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे । अकाम्—इ—अत-इति स्थिते ॥ **णेरनिटि । ६ । ४ । ५१ ॥** अनिडादावार्धधातुकपरे णेर्लोपः स्यात् । परत्वादेरनेकाच इति यणि प्राप्ते ( **ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन** )—इति वार्तिकम् । णिलोपस्य तु—पाचयतेः पाक्तिरित्यादि क्तिजन्तमवकाश इति भावः ॥ **वस्तुतस्त्वनिटीति** वचनसामर्थ्यादार्धधातुकमात्रमस्य विषयः ॥ तथा चेयङादेरपवादएवायम् । इयङ्—अततक्षत् । यण्—आटिटत् । गुणः कारणा । वृद्धिः—कारकः । दीर्घः—कार्यते ॥ **णौ चङ्युपधाया ह्रस्वः । ७।४।४१॥** चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥ **चङि । ७ । १ । ११ ॥** चङि परे अनभ्यासस्य धात्ववयवस्य प्रथमस्यैकाचो द्वे स्तः अजादेस्तु द्वितीयस्य॥ **सन्वल्लघुनि चङ्परेऽनग्लोपे । ७ । ४ । ९३ ॥** चङ्परे इति बहुव्रीहिः । स चाङ्गस्येति च द्वयमप्यावर्तते । अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत् । तत्परं यल्लघु तत्परो योऽङ्गस्यांऽभ्यासस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति।अथ वा अङ्गस्येति नावर्त्तते चङ्परे णौ यदगं तस्य योऽभ्यासो लघुपरस्तस्येत्यादिप्राग्वत् ॥ **सन्यतः । ७ । ४ । ७९ ॥** अभ्यासस्यात इकारःस्यात्सनि ॥ **दीर्घो लघोः । ७ । ४ । ९४ ॥** लघोरभ्यासस्य दीर्घः स्यात्सन्वद्भावविषये । अचीकमत् । णिङभावपक्षे ॥ ( **कमेश्च्लेश्चङ्** **वाच्यः** ) णेरभावान्न दीर्घसन्वद्भावौ—अचकमत । ( संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते । तत्रैव दीर्घः सन्वच्च नानेकाच्ष्विति माधवः ॥ १ ॥ चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते । ॥ किं त्वस्यावयवः कश्चित्तस्मादेकाच्ष्विदं द्वयम् ॥ २ ॥ वस्तुतोऽङ्गस्याऽवयवो योऽभ्यास इति वर्णनात् ॥ ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे॥ ३ ॥चकास्तौ तूभयमिदं न स्यात्स्याच्च व्यवस्थया।णेर्विशेष्यं सन्निहितं लघुनीत्यंगमेव वा ॥ ४ ॥इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात्।णेरग्लोपेऽपि सम्बन्धस्त्वगितामपि सिद्धये ५ ॥ **अथक्रम्यन्ताःपरस्मैपदिनः**-(अण१रण२वण३भण३मण५कण६क्वण७

व्रण ८ भ्रण ९ ध्वण १० शब्दार्थाः)—अणति । रणति । वणति । वकारादित्वादेत्वाभ्यासलोपौ न । ववणतुः, ववणिथ । ( धणिरपि ११ कैश्चित्पठचते)—धणति । (ओणृ १२ अपनयने )--ओणति । ओणाञ्चकार । ॥ ( शोणृ १३ वर्णगत्योः )--शोणति । शुशोण । ( श्रोणृ १४ सङ्घाते )--श्रोणति । ॥ श्लोणृ च १५ ॥ शोणादयस्त्रयोऽमी ताळव्योष्मादयः. ॥ ( पैणृ १६ गतिप्रेरणश्लेषणेषु ) पिपैण ॥ ( भ्रण १७ शब्दे ) उपदेशे नान्तोऽयम् । रषाभ्यामिति णत्वम् । ध्रणति । नोपदेशफलं यङ्लुकि--दन्ध्रंति ॥ (बणेत्यपि १८केचित्)—बेणतुः, बेणिथ ॥ ( कनी १९ दीप्तिकान्तिगतिषु )--चकान । ॥ (ष्टन २० वन २१ शब्दे ) स्तनति । वनति ॥ ( वन २१ षण २२ सम्भक्तौ ) वनेरर्थभेदात्पुनः पाठः । सनति । ससान, सेनतुः ॥ **ये विभाषा । ६ । ४ ।४३ ॥** जनसनखनामात्त्वं वा स्याद्यादौ क्ङिति । सायात्, सन्यात् ॥ ( अम २३ गत्यादिषु ) कनीदीप्तिकान्तिगतीत्यत्र गतेः परयोः शब्दसम्भक्त्योरादिशब्देन संग्रहः । अमति । आम ॥ ( द्रम २४ हम्म २५ मीमृ २६ गतौ )--द्रमति । दद्राम । ह्म्यन्तेति न वृद्धिः--अद्रमीत् । हम्मति । जहम्म । मीमति । मिमीम ॥ अयं शब्दे च ॥ ( चमु २७ छमु २८ जमु २९ झमु ३० अदने ) ॥ **ष्ठिवुक्लमुचमां शिति । ७ । ३ । ७९॥** एषामचो दीर्घः स्याच्छिति ॥ ( **आङि चम इति वक्तव्यम्**) । आचामति । आङि किम् । चमति, विचमति । अचमीत् । (जिमिं ३१ केचित्पठन्ति) जेमति । ( क्रमु३२ पादविक्षेपे ) ॥ **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । ३ । १ । ७० ॥** एभ्यः श्यन्वा स्यात्कर्त्रर्थे सार्वधातुके परे ॥ **क्रमः परस्मैपदेषु । ७ । ३ । ७६ ॥** क्रमेर्दीर्घः स्यात्परस्मैपदे परे शिति । क्राम्यति, क्रामति । चक्राम । क्राम्यतु, क्रामतु ॥ **स्नुक्रमोरनात्मनेपदनिमित्ते ।७।२।३६ ॥** अत्रैवेट् । अक्रमीत् ॥ **अथ रेवत्यन्ता अनुदात्तेतः ॥** ( अय १ वय२पय ३ मय४चय५तय६णय७गतौ)--अयते॥ **दयायासश्च । ३ । १ । ३७ ॥** दय,अय, आस्,एभ्य आम् स्याल्लिटि ॥ अयाञ्चक्रे । अयिता । अयिषीष्ट ॥ **विभाषेटः । ८ । ३ ।७९॥** इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्धन्यादेशः स्यात् । अयिषीढ्वम्, अयिषीध्वम् । आयिष्ट । आयिढ्वम्, आयिध्वम् ॥ **उपसर्गस्यायतौ । ८ । २ । १९ ॥** अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् । प्लायते । पलायते । निस्दुसोरुत्वस्यासिद्धत्वान्न लत्वम् । निरयते । दुरयते॥निर्दुरोस्तु निलयते, दुलयते । प्रत्ययं इति त्विणो रूपम् ॥ **अथ** कथमुदयति विततोर्ध्वरश्मिरज्जाविति माघः ।"इटकिटकटी" इत्यत्र प्रश्लिष्टस्य भविष्यति । **यद्वा (अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् )** । चक्षिङो ङित्करणाज्ज्ञापकात् । वादित्वाद्--ववये । पेये । मेये ।चेये । तेये । नेये ॥ ( दय८ दानगतिरक्षणहिंसादानेषु)--**आदानं** ग्रहणम् । दयाञ्चक्रे ॥ ( रय ९ गतौ ) ॥ ( ऊयी १० तन्तुसन्ताने)--ऊयाञ्चक्रे ॥(पूयी ११ विशरणे, दुर्गन्धे च)--पूयते । पुपूये ॥ ( क्नूयी १२ शब्दे, उन्दे च ) चुक्नूये । ॥(क्ष्मायी १३ विधूनने)--चक्ष्माये ॥ ( स्फायी १४ ओप्यायी १५ वृद्धौ )--स्फायते।पस्फाये । प्यायते ॥ **लिड्यङोश्च । ६ । १ । २९ ॥** लिटि, यङि च प्यायः

पीभावः स्यात्। पुनः **प्रसङ्गविज्ञानात्**पीशब्दस्य द्वित्वम्। एरनेकाच इति यण्—पिप्ये, पिप्याते, पिप्यिरे ॥ **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् । ३ । १ । ६१ ॥** एभ्यश्च्लेश्चिण्वा स्यादेकवचने तशब्दे परे ॥ **चिणो लुक् । ६ । ४ । १०४ ॥** चिणः परस्य लुक् स्यात् । अप्यायि, अप्यायिष्ट ॥ ( तायृ १६ सन्तानपालनयोः )— **सन्तानः** प्रबन्धः । तायते । तताये । अतायि, अतायिष्ट ॥ ( शल १७ चलनसंवरणयोः ) ॥ ( वल१८वल्ल१९संवरणे, संचरणे च )—ववले । ववल्ले ॥ ( मल २० मल्ल २१ धारणे )—मेले । ममल्ले॥( भल २२ भल्ल २३ परिभाषणहिंसादानेषु )—बभले । बभल्ले ॥ ( कल२४शब्दसंख्यानयोः )—कलते । चकले ॥ ( कल्ल २५ अव्यक्ते शब्दे )—कल्लते । अशब्द इति **स्वामी** । अशब्दस्तूष्णींभाव **इति च** ॥ ( तेवृ २६ देवृ २७ देवने )—तितेवे । दिदेवे ॥ ( षेवृ २८ गेवृ २९ ग्लेवृ ३० पेवृ ३१ मेवृ३२ म्लेवृ ३३ सेवने ) परिनिविभ्य इति षत्वम्—परिषेवते । सिषेवे । अयं सोपदेशोऽपीति **न्यासकारादयः । तद्भाष्यविरुद्धम्** । गेवते । जिगेवे। जिग्लेवे । पिपेवे । मेवते। म्लेवते ॥ ( शेवृ ३४ खेवृ ३५ क्लेवृ ३६ **इत्यप्येके** ) ॥ ( रेवृ३७प्लवगतौ ) **प्लवगतिः**—प्लुतगतिः । रेवते ॥—॥**अथावत्यन्ताः परस्मैपदिनः**—( मव्य १ बन्धने ) ममव्य ॥ ( सूर्क्ष्य २ ईर्क्ष्य ३ ईर्ष्य ४ ईर्ष्यार्थाः ) ॥ ( हय ५ गतौ )—अहयीत्— । यान्तत्वान्न वृद्धिः ॥(शुच्य ६ अभिषवे)—अवयवानां शिथिलीकरणं, सुरायाः सन्धानं वा अभिषवः । स्नानं च । शुशुच्य ॥(चुच्य ७ इत्येके)॥(हर्य ८ गतिकान्त्योः)—जहर्य । ॥( अल ९ भूषणपर्याप्तिवारणेषु )—अलति । आल ॥ **अतोल्रान्तस्य । ७ । २ । २ ॥** ल्रेति लुप्तषष्ठीकम् । अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः स्यात्परस्मैपदेपरे सिचि । (नेटीति निषेधस्यातोहलादेरिति विकल्पस्य चापवादः ) मा भवानलीत् । अयं **स्वरितेदित्येके** । तन्मते—अलते--इत्याद्यपि ॥ (ञि--फला१०विशरणे) । तॄफलेत्येत्वम्—फेलतुः, फेलुः । अफालीत् ॥(मील ११ श्मील १२स्मील१३क्ष्मील १४ निमेषणे)—निमेषणं संकोचः । द्वितीयस्तालव्यादिः । तृतीयो दन्त्यादिः॥ (पील१५प्रतिष्टम्भे)--**प्रतिष्टम्भो** रोधनम् ॥ ( नील १६ वर्णे )—निनील ॥ ( शील १७ समाधौ )—शीलति ॥ ( कील१८ बन्धे ) ॥ ( कूल १९ आवरणे ) ॥ ( शूल २० रुजायां, संघोषे च ) ॥ (तूल२१निष्कर्षे )--**निष्कर्षो**—निष्कोषणम् । तच्चान्तर्गतस्य बहिर्निस्सारणम् । तुतूल॥ (पूल२२सङ्घाते)॥ (मूल२३प्रतिष्ठायाम् ) ॥ (फल २४ निष्पत्तौ )— फेलतुः, फेलुः ॥ (चुल्ल २५ भावकरणे )--**भावकरणम्**—अभिप्रायाविष्कारः ॥ ( फुल्ल २६ विकसने )॥ ( चिल्ल २७ शैथिल्ये, भावकरणे च )॥ ( तिल २८ गतौ ) तेलति ॥ ( तिल्ल २९ **त्येके** )--तिल्लति ॥ ( वेल ३० चेल ३१ केल ३२ खेल ३३ क्ष्वेल ३४ वेल्ल ३५ चलने)--पक्ष्म ऋदितः।षष्ठो लोपधः ॥ ( पेल ३६ फेल ३७ शेल३८गतौ )—३८ ॥ ( षेल ३९ **इत्येके** ) ॥ ( स्खल ४० संचलने )—चस्खाल । अस्खालीत् ॥ ( खल ४१ सञ्चये ) ॥ ( गल ४२ अदने )—गलति । अगालीत् ॥ ( षल ४३ गतौ— सलति ॥( दल ४४ विशरणे ) ॥ ( श्वल ४५ श्वल्ल ४६ आशुगमने )--शश्वाल ।

अश्वालीत्। शश्वल्ल। अश्वल्लीत्॥ ( खोल ४७ खोर्ऋ ४८ गतिप्रतिघाते )—खोलति। खोरति॥ ( धोर्ऋ ४९ गतिचातुर्ये ) धोरति॥ ( त्सर ५० छद्मगतौ )—तत्सार। अत्सारीत्।॥ ( क्मर ५१ हूर्च्छने )—चक्मार॥ ( अभ्र ५२ वभ्र ५३ मभ्र ५४ चर ५५ गत्यर्थाः )। चरतिर्भक्षणेऽपि। अभ्रति। आनभ्र। माभवानभ्रीत्। अङ्गान्त्यरेफस्यातः समीपत्वाभावान्न वृद्धिः॥ ( ष्ठिवु ५६ निरसने )। ष्ठिवुक्लम्विति दीर्घः ष्ठीवति। अस्य द्वितीयस्थकारष्ठकारो वेति **वृत्तिः**। तिष्ठेव, तिष्ठिवतुः, तिष्ठिवुः। टिष्ठेव, टिष्ठिवतुः, टिष्ठिवुः। हलि चेति दीर्घः—ष्ठीव्यात्॥ ( जि ५७ जये ) अयमजन्तेषु पठितुं युक्तः। **जय** उत्कर्षप्राप्तिः। अकर्मकोऽयम्। जयति॥ **सन्लिटोर्जेः।** ७। ३। ५७॥ जयतेः सँल्लिण्निमित्तो योऽभ्यासस्ततः परस्य कुत्वं स्यात्। जिगाय, जिग्यतुः, जिग्युः। जिगयिथ, जिगेथ। जिगाय, जिगय, जिग्यिव, जिग्यिम। जेता। जीयात्। अजैषीत्॥ ( जीव ५८ प्राणधारणे )—जिजीव॥ ( पीव ५९, मीव ६०, तीव ६१, णीव ६२, स्थौल्ये )—पिपीव। मिमीव। तितीव। निनीव॥ ( क्षीवु ६३, क्षेवु ६४, निरसने )॥ उर्वी ६५, तुर्वी ६६, थुर्वी ६७, दुर्वी ६८, धुर्वी ६९, हिंसार्थाः) ऊर्वाञ्चकार। उपधायां चेति दीर्घः। तुतूर्व॥ ( गुर्वी ७० उद्यमने )—गूर्वति। जुगूर्व॥ ( मुर्वी ७१ बन्धने )॥ ( पुर्व ७२, पर्व ७३, मर्व ७४, पूरणे )॥ ( चर्व ७५ अदने )—( भर्व ७६ हिंसायाम् )॥ ( कर्व ७७, खर्व ७८, गर्व ७९, दर्पे )॥ ( अर्व ८०, शर्व ८१, षर्व ८२, हिंसायाम् )—आनर्व। शर्वति। सर्वति॥ ( इवि ८३ व्याप्तौ )—इन्वति। इन्वाञ्चकार॥ ( पिवि ८४, मिवि ८५, णिवि ८६ सेचने )। ( तृतीयो मूर्द्धन्योष्मादिरित्येके सेवन इति **तरङ्गिण्याम्**। पिन्वति। पिपिन्व॥ ( हिवि ८७, दिवि ८८, धिवि ८९, जिवि ९०, प्रीणनार्थाः )—हिन्वति। दिन्वति॥ **धिन्विकृण्व्योर च। ३। १। ८०॥** अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च शब्विषये। ( अतो लोपः )। तस्य स्थानिवद्भावाल्लघूपधगुणो न। उप्रत्ययस्य पित्सु गुणः—धिनोति। धिनुतः। धिन्वन्ति॥ **लोपश्चास्याऽन्यतरस्यां म्वोः। ६। ४। १०७॥** असंयोगपूर्वोयः प्रत्ययोकारस्तदन्तस्यांगस्य लोपो वा स्यान्म्वोः परयोः। धिन्वः, धिनुवः, धिन्मः, धिनुमः। मिपि तु परत्वाद्गुणः—धिनोमि॥ **उतश्च प्रत्ययादसंयोगपूर्वात्। ६। ४। १०६॥** असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादंगात्परस्य हेर्लुक् स्यात्। धिनु। नित्यत्वादुकारलोपात्पूर्वमाट्—धिनवाव, धिनवाम। जिन्वति—इत्यादि॥ ( रिवि ९१ रवि ९२, धवि ९३, गत्यर्थाः ) रिण्वति। रण्वति। धन्वति॥ ( कृवि ९४ हिंसाकरणयोश्च )। चकाराद्गतौ। कृणोति—इत्यादि धिनोतिवत्। **अयं स्वादौ च॥** ( मव ९५ बन्धने, ) मवति। मेवतुः, मेवुः। अमवीत्, अमावीत्॥ ( अव ९६ रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिंगनहिंसादानभागवृद्धिषु )—अवति। आव। मा भवानवीत्।॥ ( धावु ९७ गतिशुद्ध्योः )—**स्वरितेत्**—धावति, धावते। दधाव, दधावे॥ **अथोष्मान्ता आत्मनेपदिनः**—( धुक्ष १ धिक्ष २ सन्दीपनक्लेशनजीवनेषु)-धुक्षते। दुधुक्षे। धिक्षते। दिधिक्षे॥ ( वृक्ष ३ वरणे)-वृक्षते।

ववृक्षे ॥ ( शिक्ष ४ विद्योपादाने )--शिक्षते ॥ ( भिक्ष ५ भिक्षायामलाभे, लाभे च )--भिक्षते ॥ ( क्लेश ६ अव्यक्तायां वाचि )-**बाधन इति दुर्गः** । क्लेशते । चिक्लेशे। ( दक्ष ७ वृद्धौ, शीघ्रार्थे च )--दक्षते । ददक्षे ॥ दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु )--दीक्षते । दिदीक्षे ॥ ( ईक्ष ९ दर्शने )--ईक्षाञ्चक्रे ॥ ( ईष १० गतिहिंसादर्शनेषु )--ईषाञ्चक्रे ॥ ( भाष ११ व्यक्तायां वाचि )--भाषते ॥ ( वर्ष १२ स्नेहने )--दन्त्योष्ठ्यादिः । ववर्षे ॥ ( गेषृ १३ अन्विच्छायाम् )॥(ग्लेषृ१४इत्येके ) **अन्विच्छा** अन्वेषणम् । जिगेषे ॥ ( पेषृ १५ प्रयत्ने ) पेषते ॥ (जेषृ १६, णेषृ १७,एषृ १८ प्रेषृ१९, गतौ )--जेषते । नेषते । एषाञ्चक्रे । पिप्रेषे ॥(रेषृ २०, हेषृ२१ ह्रेषृ २२,अव्यक्ते शब्दे ) आद्यो **वृकशब्दे** । ततो **द्वौ अश्वशब्दे** । रेषते । हेषते । ह्रेषते॥(कासृ,२३शब्दकुत्सायाम् ) कासाञ्चक्रे ॥ ( भासृ, २४ दीप्तौ ) बभासे ॥ ( णासृ २५, रासृ २६, शब्दे )नासते । प्रणासते ॥ ( णस, २७ कौटिल्ये ) नसते ॥ ( भ्यस२८ भये )--भ्यसते। बभ्यसे ॥ ( आङः--शसि २९, इच्छायाम् ) आशंसते । आशशंसे ॥ ( ग्रसु ३० ग्लसु ३१, अदने )--जग्रसे । जग्लसे ॥ ( ईह, ३२ चेष्टायाम् )--ईहाञ्चक्रे ॥ ( बहि ३३, महि ३४, वृद्धौ )--बंहते । बबंहे । मंहते ॥ ( अहि,३५गतौ)--अंहते।आनंहे ( गर्ह ३६, गल्ह ३७ कुत्सायाम् )--जगर्हे । जगल्हे ॥ ( बर्ह ३८, बल्ह ३९, प्राधान्ये ) ओष्ठ्यादी ॥ ( वर्ह ४०, वल्ह ४१ परिभाषणहिंसाच्छादनेषु )--दन्त्योष्ठ्यादी । **केचित्तु** पूर्वयोर्दन्त्योष्ठ्यादितां **चाहुः** ॥ (प्लिह ४२, गतौ)--पिप्लिहे ॥ ( वेहृ ४३, जेहृ ४४,बाहृ ४५,प्रयत्ने )--आद्यो--दन्त्योष्ठ्यादिः । अन्त्यः--केवलोष्ठ्योदिः । उभावप्योष्ठ्यादी इत्येके । दन्त्योष्ठ्यादी इत्यपरे । **जेहतिर्गत्यर्थोऽपि** । ववाहे॥(द्राहृ४६,निद्राक्षये ) निक्षेपे इत्येके । ( काशृ ४७ दीप्तौ ) चकाशे ॥ ( ऊह ४८ वितर्के )--ऊहाञ्चक्रे ( गाहू ४९ विलोडने )--गाहते । जगाहे । जगाहिषे, जघाक्षे । जगाहिढ्वे । जगाहिध्वे । जघाढ्वे ॥ **ढो ढे लोपः** । ८ । ३ । १३ ॥ ढस्य लोपः स्याड्ढे परे । गाहिता, गाढा । गाहिष्यते, घाक्ष्यते । गाहिषीष्ट, घाक्षीष्ट । अगाहिष्ट, अगाढ, अघाक्षाताम्, अघाक्षत । अगाढाः । अघाढ्वम् । अघाक्षि ॥ ( गृहू ५० ग्रहणे ) गर्हते । जगृहे ॥ ( **ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन** ) ॥ जगृहिषे, जघृक्षे । जघृढ्वे । गर्हिता, गर्ढा । गर्हिष्यते, घर्क्ष्यते । गर्हिषीष्ट, घृक्षीष्ट । लुङि--अगर्हिष्ट । इडभावे--॥ **शल इगुपधादनिटः क्सः** । ३ । १ । ४५ ॥ इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अघृक्षत ॥ **क्सस्याचि** । ७ । ३ । ७२ ॥ अजादौ तङि क्सस्य लोपः स्यात् । (अलोऽन्त्यस्य)--अघृक्षाताम्, अघृक्षन्त ॥ ( ग्लह५१ च ) ग्लहते ॥ ( घुषि ५२कान्तिकरणे)--घुंषते। जुघुंषे । केचिद्घषेत्यदुपधं पठन्ति ॥ ॥**अथार्हत्यन्ताःपरस्मैपदिनः**--( घुषिर् १ अविशब्दने) विशब्दनं प्रतिज्ञानम् । ततोऽन्यस्मिन्नर्थे **इत्येके**।शब्दे **इत्यन्येपेठुः**।घोषति । जुघोष । घोषिता।इरित्त्वादङ् वा--अघुषत्, आघोषीत्॥ ( अक्षू २ व्याप्तौ)॥ **अक्षोऽन्यतरस्याम्** । ३।१।७५॥ अक्षो वा श्नुप्रत्ययः स्यात्कर्त्रर्थे सार्वधा-

तुके परे। पक्षे शप्। अक्ष्णोति, अक्ष्णुतः, अक्ष्णुवन्ति। अक्षति, अक्षतः, अक्षन्ति। आनक्ष। आनक्षिथ, आनष्ठ। अक्षिता, अष्टा। अक्षिष्यति। स्कोरिति कलोपः। (षढोः कः सि)–अक्ष्यति। अक्ष्णोतु। अक्ष्णुहि। अक्ष्णवानि। आक्ष्णोत्। आक्ष्णवम्। अक्ष्णुयात्। अक्ष्यात्। ऊदित्त्वाद्वेट्। (नेटि)-मा भवान्–अक्षीत्, अक्षिषुः। इडभावे तु मा भवान्-आक्षीत्, आष्टाम्, आक्षुः॥ (तक्षू ३ त्वक्षू ४ तनूकरणे)॥ **तनूकरणे तक्षः। ३। १। ७६॥** स्नुर्वा स्यात् शब्विषये। तक्ष्णोति, तक्षति काष्ठम्। ततक्षिथ, ततष्ठ। अतक्षीत्, अतक्षिष्टाम्। अताक्षीत्, आताष्टाम्। तनूकरणे किम्। वाग्भिः–संतक्षति। भर्त्सयतीत्यर्थः॥ (उक्ष ५ सेचने)–उक्षाञ्चकार॥ (रक्ष ६ पालने)॥ (णिक्ष ७ चुम्बने प्रणिक्षति॥ (तृक्ष ८ स्तृक्ष ९ णक्ष १० गतौ) तृक्षतीति स्तृक्षति। नक्षति॥ (वक्ष ११ रोषे (सङ्घाते **इत्येके**॥ (मृक्ष १२ सङ्घाते)॥ (म्रक्ष १३ इत्येके)॥ (तक्ष १४ त्वचने) **त्वचनं** संवरणं, त्वचो ग्रहणं च। (पक्ष परिग्रहे) **इत्येके**॥ (सूर्क्ष १५ आदरे) सुसूर्क्ष। अनादर इति तु क्वाचित्कोऽपपाठः। अवज्ञावहेलनमसूर्क्षणमित्यमरः॥ (काक्षि १६ वाक्षि १७ माक्षि १८ काङ्क्षायाम्)॥ (द्राक्षि १९ ध्राक्षि २० ध्वाक्षि २१ घोरवासिते च)॥ (चूष २२ पाने)–चुचूष॥ (तूष २३ तुष्टौ)॥ (पूष २४ वृद्धौ)॥ (मूष २५ स्तेये)। (लूष २६ रूष २७ भूषायाम्)॥ (शूष २८ प्रसवे)–**प्रसवोऽ**भ्यनुज्ञानम्। तालव्योष्मादिः॥ (यूष २९ हिंसायाम्)॥ (जूष ३० च)॥ (भूष ३१ अलङ्कारे)–भूषति॥ (ऊष ३२ रुजायाम्)–उषाञ्चकार॥ (ईष ३३ उञ्छे)॥ (कष ३४ खष ३५ शिष ३६ जष ३७ झष ३८ शष ३९ वष ४० मष ४१ रुष ४२ रिष ४३ हिंसार्थाः)। तृतीयषष्ठौ तालव्योष्मादी। सप्तमो दन्त्योष्ठ्यादिः। चकाष। चखाष। शिशेष। शिशेषिथ, शेष्टा। क्सः–अशिक्षत्। अशेक्ष्यत्। जेषतुः। जझषतुः। शेषतुः। ववषतुः। मेषतुः॥ **तीषसहलुभरुषरिषः। ७। २। ४८॥** इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात्। रोषिता, रोष्टा। रोषिष्यति। रेषिता, रेष्टा। रेषिष्यति॥ (भष ४४ भर्त्सने)–इह **भर्त्सनं** श्वरवः। भषति। बभाष॥ (उष ४५ दाहे)–ओषति॥ **उषविदजागृभ्योऽन्यतरस्याम्। ३। १। ३८॥** एभ्यो लिट्याम्वा स्यात्। ओषाञ्चकार, उवोष, ऊषतुः। उवोषिथ॥ (जिषु ४६ विषु ४७ मिषु ४८ सेचने)–जिजेष। क्रादिनियमादिट्। विवेषिथ। विविषिव। वेष्टा। वेक्ष्यति। अविक्षत्॥ (पुष ४९ पुष्टौ पोषति। पोषिता। पोषिष्यति। अपोषीत्। अनिट्केषु पुष्येति श्यना निर्देशादयं सेट्। अतो न क्सः। अङ्विधौ दैवादिकस्य ग्रहणान्नाऽङ्॥ (श्रिषु ५० श्लिषु ५१ प्रुषु ५२ प्लुषु ५३ दाहे)–श्रेषति। शिश्रेष। श्रेषिता। श्लेषति। शिश्लेष। श्लेषिता अयमपि सेट्। अनिट्सु दैवादिकस्यैव ग्रहणमिति **कैयटादयः॥ यत्त्वनिट्कारिकान्यासे** द्वयोर्ग्रहणमित्युक्तम्॥ **तत्स्वोक्तिविरोधाद् ग्रन्थान्तरविरोधाच्चोपेक्ष्यम्॥** पुप्रोष। पुप्लोष॥ (पृषु ५४ वृषु ५५ मृषु ५६ सेचने) मृषु **सहने च। इतरौ हिंसासंक्लेशनयोश्च।** पर्षति पपर्ष। पृष्यात्॥ (घृषु ५७ संघर्षे)॥ (हृषु ५८ अलीके)॥ (तुस ५९ ह्रस ६० ह्लस ६१ रस ६२ शब्दे)–तुतोस। जह्रास जह्लास। ररास॥ (लस ६३ श्लेषणक्रीडनयोः)॥

( घस्लृ ६४ अदने )—(अयं न सार्वत्रिकः) लिट्यन्यतरस्यामित्यदेर्घस्लादेशविधानात्। ततश्च यत्र लिङ्गं वचनं वास्ति तत्रैवास्य प्रयोगः। अत्रैव पाठः शपि परस्मैपदे लिङ्गम्। लृदित्करणमङि।अनिट्कारिकासु पाठो वलाद्यार्धधातुके।क्मरचि तु विशिष्योपादानम्। घसति। घस्ता ॥ **सस्याऽऽर्धधातुके। ७। ४। ४९॥** सस्य तः स्यात्सादावार्धधातुके। घत्स्यति। घसतु। अघसत्। लिङ्गाद्यभावादाशिष्यस्याप्रयोगः॥ **पुषादिद्युताद्यलृदितः परस्मैपदेषु। ३। १। ५५॥** श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात्परस्मैपदेषु। अघसत् ॥ ( जर्ज ६५ चर्च ६६ झर्झ ६७ परिभाषणहिंसातर्जनेषु ) ॥ ( पिसृ ६८ पेसृ ६९ गतौ )—पिपिसतुः। पिपेसतुः। (हसे ७० हसने)। एदित्वान्न वृद्धिः—अहसीत् ॥ ( णिश ७१ समाधौ ) तालव्योष्मान्तः। प्रणेशति ॥ ( मिश ७२ मश ७३ शब्दे, रोषकृते च ॥ ( शव ७४ गतौ ) दन्त्योष्ठ्यान्तः।तालव्योष्मादिः। शवति। अशवीत्, अशावीत्॥(शश ७५ प्लुतगतौ)तालव्योष्माद्यन्तः। शशाश, शेशतुः, शेशुः। शेशिथ॥ (शसु ७६ हिंसायाम्)—दन्त्योष्मान्तः। न शसददेत्येत्वं न—शशसतुः, शशसुः।शशसिथ॥ (शंसु ७७ स्तुतौ)—अयं **दुर्गतावपीति दुर्गः।** नृशंसो घातुकः क्रूर इत्यमरः। शशंस। आशिषि नलोपः—शस्यात्॥ ( चह ७८ परिकल्कने )—परिकल्कनं शाठ्यम्। अचहीत्॥ (मह ७९ पूजायाम्)—अमहीत्॥(रह ८० त्यागे)॥ (रहि ८१ गतौ)—रंहति।रंह्यात्॥(दृह ८२ दृहि ८३ वृह ८४ वृहि ८५ वृद्धौ)- दर्हति ददर्ह, ददृहतुः। दृंहति। बर्हति। बृंहति। ( बृहि ८६ शब्दे च ) बृंहितं करिगर्जितम् ॥ ( बृहिर् इत्येके )—अबृहत्, अबर्हीत्। ॥ ( तुहिर् ८७ दुहिर् ८८ उहिर् ८९ अर्दने )—तोहति। तुतोह। अतुहत्, अतोहीत्। दोहति। अदुहत्, अदोहीत्। अनिट्कारिकास्वस्य दुहेर्ग्रहणं नेच्छन्ति। ओहति। उवोह, ऊहतुः। ओहिता। मा भवानुहत्। औहीत्॥ ( अर्ह ९० पूजायाम् )—आनर्ह॥ **अथ कृपूपर्यन्ता अनुदात्तेतः—** (द्युत, दीप्तौ)—द्योतते॥ **द्युतिस्वाप्योः संप्रसारणम्।७।४।६७॥**अनयोरभ्यासस्य सम्प्रसारणं स्यात्। दिद्युते, दिद्युताते। द्योतिता॥ **द्युद्भ्यो लुङि। १। ३। ९१॥** द्युतादिभ्यो लुङः परस्मैपदं वा स्यात्। परस्मैपदे परे—अङ् अद्युतत्। अद्योतिष्ट ॥ (श्विता२ वर्णे)—श्वेतते। शिश्विते। अश्वितत्। अश्वेतिष्ट॥(ञिमिदा३ स्नेहने)—मेदते **मिदेर्गुणः।७।३।८२॥** मिदेरिको गुणः स्यादित्संज्ञकशकारादौ प्रत्यये परे। एश आदिशित्त्वाभावान्नानेन गुणः—मिमिदे। अमिदत्। अमेदिष्ट॥ (ञिष्विदा४स्नेहनमोचनयोः) मोहनयोरित्येके। स्वेदते। सिष्विदे। अस्विदत्।अस्वेदिष्ट॥(ञिक्ष्विदा५चेत्येके) अक्ष्विदत्।अक्ष्वेदिष्ट॥ (रुच६ दीप्तावभिप्रीतौ च)—रोचते सूर्यः। हरये रोचते—भक्तिः। अरुचत्। अरोचिष्ट॥ (घुट ७ परिवर्तने)—घोटते।अघुटत्, अघोटिष्ट॥ (रुट ८ लुट ९ लुठ १० प्रतिघाते)—अरुटत्, अरोटिष्ट॥(शुभ ११ दीप्तौ)॥ (क्षुभ १२ सञ्चलने)॥ ( णभ १३ तुभ १४ हिंसायाम् ) आद्योऽभावेपि।नभन्तामन्यके समे। मा भूवन्नन्यके सर्वे इति **निरुक्तम्।** अनभत्, अनभिष्ट। अतुभत्, अतोभिष्ट। **इमौ दिवादी क्र्यादी च।**(स्रंसु १५ ध्वंसु १६ भ्रंसु १७ अवस्रंसने) ( ध्वंसु गतौ च)अङि न लोपः—

अस्रसत्,अस्रंसिष्ट । नास्रसत्करिणां ग्रैवमिति रघु वंशे, ( भ्रंशु१८इत्यपि केचित्पेठुः ) अत्र तृतीय एव ताल्व्यान्त इत्यन्ये। "भ्रशु भ्रंशु अधः पतने"इति दिवादौ॥(स्रम्भु१९ विश्वासे)-अस्रभत्, अस्रम्भिष्ट । दन्त्यादिरयम् ॥ ताल्व्यादिस्तु, प्रमादे गतः । (वृतु२०वर्तने)-वर्तते । ववृते ॥ **वृद्भ्यः स्यसनोः । १।३।९२ ॥** वृतादिभ्यः परस्मैपदं वा स्यात्स्ये, सनि च ॥ **न वृद्भ्यश्चतुर्भ्यः । ७ । २ । ५९ ॥** एभ्यः सकारादेरार्धधातुकस्येण् न स्यात्तङानयोरभावे । वर्त्स्यति, वर्तिष्यते । अवृतत्, अवर्तिष्ट । अवर्त्स्यत्, अवर्तिष्यत ॥ (वृधु २१ वृद्धौ) ॥ (शृधु २२ शब्दकुत्सायाम्)। इमौ वृतिवत्, (स्यन्दू २३ प्रस्रवणे)-स्यन्दते । सस्यन्दे । सस्यन्दिषे, सस्यन्त्से । सस्यन्दिध्वे, सस्यन्ध्वे । स्यन्दिता, स्यन्ता । ( वृद्भ्यः स्यसनोः )-इति परस्मैपदे कृते-(**ऊदित्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्न वृद्भ्य इति निषेधः** )। स्यन्त्स्यति, स्यन्दिष्यते, स्यन्त्स्यते। स्यन्दिषीष्ट, स्यन्त्सीष्ट । (द्युद्भ्यो लुङि)-इति परस्मैपदपक्षे अङ्।नलोपः-अस्यदत्, अस्यन्दिष्ट अस्यन्त, अस्यन्त्साताम्, अस्यन्त्सत । अस्यन्दिष्यत, अस्यन्त्स्यत ॥ **अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ।८।३।७२॥** एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात् । अनुष्यन्दते, अनुस्यन्दते वा जलम् । अप्राणिषु किम् । अनुस्यन्दते हस्ती । अप्राणिष्विति पर्युदासान्मत्स्योदके अनुष्यन्दते इत्यत्रापि पक्षे षत्वं भवत्येव। प्राणिषु नेत्युक्तौ तु न स्यात् ॥ ( कृपू २४ सामर्थ्ये ) **कृपो रो लः। ।८।२।१८॥** कृप उ इति च्छेदः । कृपेति लुप्तषष्ठीकं पदम् । तच्चावर्तते । कृपो यो रेफस्तस्य लःस्यात्, कृपेर्ऋकारस्यावयवो यो रेफसदृशस्तस्य च लकारसदृशः स्यात्। कल्पते। चक्लृपे। चक्लृपिषे, चक्लृप्से, इत्यादि स्यन्दिवत् ॥ **लुटि च कॢपः । १ । ३ । ९३ ॥** लुटि, स्यसनोश्च, कृपेः परस्मैपदं वा स्यात् ॥ **तासि च कॢपः । ७ । २ । ६० ॥** कृपेः परस्य तासेः, सकारादेरार्धधातुकस्य चेण्न स्यात्तङानयोरभावे । कल्प्तासि, कल्प्तास्थः । कल्पितासे, कल्प्तासे । कल्प्स्यति,कल्पिष्यते, कल्प्स्यते । कल्पिषीष्ट, क्लृप्सीष्ट । अक्लृपत् अकल्पिष्ट, अक्लृप्त । अकल्पिष्यत,अकल्प्यत ॥ **( वृत् ) वृतः सम्पूर्णो द्युतादिर्वृतादिश्चेत्यर्थः ॥ अथ त्वरत्यन्तास्त्रयोदशानुदात्तेतः षितश्च**-( घट १ चेष्टायाम् )-घटते । जघटे ( घटादयो मितः ) इति वक्ष्यमाणेन मित्संज्ञा तत्फलं तु णौ-( मितां ह्रस्वः )-इति, ( चिण्णमुलोर्दीर्घोऽन्यतरस्याम् )-इति च वक्ष्यते । घटयति, विघटयाति ॥ **कथं तर्हि** कमलवनोद्घाटनं कुर्वते य, प्रविघाटयिता समुत्पतन्हरिदश्वः कमलाकरानिक इत्यादि ॥ **शृणु** ॥ (घट सङ्घाते) इति चौरादिकस्येदम् ॥ **न च** तस्यैवार्थविशेषे मित्त्वार्थमनुवादोऽयमिति **वाच्यम्** ॥ ( नान्ये मितोऽहेतौ )-इति निषेधात्। अहेतौ स्वार्थे णिचि ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेत्यर्थः ॥ ( व्यथ २ भयसंचलनयोः )-व्यथते ॥ **व्यथो लिटि । ७ । ४ । ६८ ॥** व्यथोऽभ्यासस्य सम्प्रसारणं स्याल्लिटि । हलादिश्शेषापवादः । थस्य हलादिश्शेषेण निवृत्तिः-विव्यथे ॥ ( प्रथ ३ प्रख्याने )-पप्रथे ॥ ( प्रस ४ विस्तारे )-पप्रसे ॥ ( म्रद ५ मर्दने ) ॥ ( स्खद ६ स्खदने ) स्खदनं विदा-

वणम् ॥ ( क्षजि ७ गतिदानयोः ) **( मित्त्वसामर्थ्यादनुपधात्वेऽपि चिण्णमुलो-रिति दीर्घविकल्पः )**—अक्षञ्जि, अक्षाञ्जि । क्षञ्जङ्क्षञ्जम् । क्षाञ्जङ्क्षाञ्जम् ॥ ( दक्ष ८ गतिहिंसनयोः ) योऽयं वृद्धिशैघ्र्ययोरनुदात्तेत्सु **पठितस्त**स्येहार्थविशेषे मित्त्वार्थोऽनुवादः ॥ ( क्रप ९ कृपायां गतौ ) ॥ ( कदि १० क्रदि ११ क्लदि १२ वैक्लव्ये ) वैकल्य इत्येके । त्रयोऽप्यनिदित इति **नन्दी** । इदित इति **स्वामी** । कदिक्रदिक्ल-दीनामाह्वानरोदनयोः परस्मैपदिषूक्तानां पुनरिह पाठो मित्त्वार्थः, आत्मनेपदार्थश्च ॥ ( ञित्वरा १३ संभ्रमे ) ॥ **घटादयः षितः** । षित्त्वादङ् कृत्सु **वक्ष्यते** ॥ * ॥ **अथ फणान्ताः परस्मैपदिनः**—( ज्वर १ रोगे )—ज्वरति । जज्वार । ॥ ( गड २ सेचने ) गडति । जगाड ॥ ( हेड ३ वेष्टने ) हेडृ अनादर इत्यात्मनेपदिषु **गतः** । स एवोत्सृष्टा-नुबन्धोऽनूद्यते--अर्थविशेषे मित्त्वार्थम् । परस्मैपदिभ्यो ज्वरादिभ्यः प्रागेवानुवादे कर्तव्ये **( तन्मध्येऽनुवादसामर्थ्यात्परस्मैपदम् )** । हेडति । जिहेड । हिडयति । अहिडि, अहीडि । अनादरे तु हेडयति ॥ ( वट ४ भट ५ परिभाषणे )—वट वेष्टने भट भृता-विति **पठितयोः** परिभाषणे मित्त्वार्थोऽनुवादः ॥ ( णट ६ नृतौ ) इत्थमेव पूर्वमपि **पठि-तम्** । **तत्रायं विवेकः**--पूर्वं पठितस्य नाट्यमर्थः । यत्कारिषु नटव्यपदेशः--वाक्यार्था-भिनयो **( नाट्यम् )** घटादौ तु नृत्तं नृत्यं चार्थः । यत्कारिषु नर्तकव्यपदेशः--पदार्था-भिनयो-**( नृत्यम् )** । गात्रविक्षेपमात्रं-**( नृत्तम् )** । **केचित्तु** घटादौ " णट नतौ" इति **पठन्ति** । गतावित्यन्ये । णोपदेशपर्युदासवाक्ये भाष्यकृता नाटीति दीर्घपाठाद् घटादिर्णोपदेश एव ॥ ( ष्टक ७ प्रतीघाते ) स्तकति ॥ ( चक ८ तृप्तौ ) तृप्ति-प्रतीघातयोः पूर्वं **पठितस्य** तृप्तिमात्रे मित्त्वार्थोऽनुवादः । आत्मनेपदिषु पठितस्य-**( परस्मैपदिष्वनुवादात्परस्मैपदम् )** ॥ ( कखे ९ हसने ) एदित्वान्न वृद्धिः-- अकखीत् ॥ ( रगे १० शङ्कायाम् ) ॥ ( लगे ११ सङ्गे ) ॥ ( ह्रगे १२ ह्लगे १३ षगे १४ ष्टगे १५ संवरणे ) ॥ ( कगे १६ नोच्यते ) अस्यायमर्थ इति विशिष्य नोच्यते । क्रियासामान्यार्थ त्वात् अनेकार्थत्वादित्यन्ये ॥ ( अक १७ अग १८ कुटिलायां गतौ ) ( कण १९ रण २० गतौ ) चकाण । रराण ॥ ( चण २१ शण २२ श्रण २३ दाने च ) ( शण २४ गता-**वित्यन्ये** ) ॥ श्रथ २५ श्लथ २६ क्नथ २७ क्लथ २८ हिंसार्थाः ) ॥ **( जासिनि-प्रहणेति सूत्रे क्राथेति मित्त्वेऽपि वृद्धिर्निपात्यते )**—क्राथयति । मित्त्वं तु निपातनात्परत्वाच्चिण्णमुलोरिति दीर्घे चरितार्थम् । अक्रथि, अक्राथि । क्रथङ्क्रथम् । क्राथङ्क्राथम् ॥ ( चन २९ च ) हिंसायामिति **शेषः** ॥ ( वनु ३० च । नोच्यते ) वनु इत्यपूर्व एवायं धातुः । न तु तानादिकस्यानुवादः । उदित्करणसामर्थ्यात् । तेन क्रियासामान्ये—वनतीत्यादि । प्रवनयति । अनुपसृष्टस्य तु मित्त्वविकल्पो **वक्ष्यते** ॥ ( ज्वल ३१ दीप्तौ )—णप्रत्ययार्थं **पठिष्यमाण** एवायं मित्त्वार्थमनूद्यते—प्रज्वलयति ॥ ( ह्वल ३२ ह्मल ३३ चलने )—प्रह्वलयति प्रह्मलयति ॥ ( स्मृ ३४ आध्याने ) चिन्तायां पठिष्यमाणस्य आध्याने मित्त्वार्थोऽनुवादः । **आध्यानमुत्कण्ठापूर्वकं** स्मरणम् ॥ ( दॄ ३५ भये ) दॄ विदारणे इति **क्र्यादेरयं** मित्त्वार्थोऽनुवादः । दॄणन्तं मे ( यति--दरयति । भयादन्यत्र-दारयति । धात्वन्तरमे-वेदमिति मते तु दरतीत्यादि ॥ **केचिद्धटादौ**, अर्त्तिस्सृदृदत्वरेति सूत्रे च, दृ इति दीर्घस्थाने ह्रस्वं

ठन्ति॥तन्नेति माधवः ॥ (नॄ नये)–क्र्यादिषु ३६ पठिष्यमाणस्यानुवादः । नयादन्यत्र नारयति ॥ (श्रा ३७ पाके )–श्रै इति कृतात्वस्य, श्रा इत्यादादिकस्य च, सामान्ये नानुकरणम्–(लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य) (लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् )–इति परिभाषाभ्याम् । श्रपयति–विक्लेदयतीत्यर्थः । पाकादन्यत्र–श्रापयति । स्वेदयतीत्यर्थः ॥ (मारणतोषणनिशामनेषु ज्ञा ३८ )–निशामनं चाक्षुषज्ञानमिति माधवः । ज्ञापनमात्रमित्यन्ये । निशानेष्विति पाठान्तरम् । निशानं तीक्ष्णीकरणम् । एष्वेवार्थेषु जानातिर्मित्। (ज्ञप मिच्च)–इति चुरादौ ज्ञापनं मारणादिकं च तस्यार्थः॥कथं विज्ञापना भर्तृषु सिद्धिमेतीति, तज्ज्ञापयत्याचार्य इति च शृणु ॥ माधवमतेऽचाक्षुषज्ञाने मित्त्वाभावात् । ज्ञापनमात्रे मित्त्वमिति मते तु (ज्ञा नियोगे)–इति चौरादिकस्य । धातूनामनेकार्थत्वात् । निशानेष्विति पठतां हरदत्तादीनां मते तु न काप्यनुपपत्तिः॥(कम्पने चलिः३९ ) । (चल कम्पने)–इति ज्वलादिः । चलयति शाखाम् । कम्पनादन्यत्र तु–शीलं–चालयति । अन्यथा करोतीत्यर्थः । हरतीत्यर्थ इति स्वामी । सूत्रं चालयति । क्षिपतीत्यर्थः ॥ (छदिः४० ऊर्जने) (छद अपवारण)इति चौरादिकस्य स्वार्थे णिजभावे मित्त्वार्थोऽयमनुवादः । अनेकार्थत्वादूर्जेऽरर्थे वृत्तिः । छदन्तं प्रयुङ्क्ते छदयति । बलवन्तं, प्राणवन्तं वा, करोतीत्यर्थः । अन्यत्र तु–छादयति । अपवारयन्तं प्रयुङ्क्ते इत्यर्थः । स्वार्थणिचि तु–छादयति । बलीभवति, प्राणीभवति, अपवारयति वेत्यर्थः ॥ (जह्वोन्मथने लडिः४१ )–(लड विलासे)–इति पठितस्य मित्त्वार्थोऽनुवादः। उन्मथनं ज्ञापनम्। जिह्वाशब्देन षष्ठीतत्पुरुषः–लडयति जिह्वाम् । तृतीयातत्पुरुषो वा–लडयति जिह्वया ॥ अन्ये तु जिह्वाशब्देन तद्व्यापारो लक्ष्यते । समाहारद्वन्द्वोऽयम् । लडयति शत्रुम् । लडयति दधि । अन्यत्र लाडयति पुत्रम् ॥ ( मदी ४२ हर्षग्लेपनयोः)–ग्लेपनं दैन्यम्। दैवादिकस्य मित्त्वार्थोऽयमनुवादः।मदयति । हर्षयति, ग्लेपयति वेत्यर्थः । अन्यत्र–मादयति । चित्तविकारमुत्पादयतीत्यर्थः ॥ (ध्वन ४३ शब्दे) भाव्ययं मित्त्वार्थमनूद्यते । ध्वनयति घण्टाम् । अन्यत्र–ध्वानयति । अस्पष्टाक्षरमुच्चारयतीत्यर्थः ॥ अत्र भोजः ( दलि ४४वलि४५स्खलि ४६ रणि ४७ ध्वनि ४८ त्रपि ४९ क्षपयश्च ५० ) इति पपाठ ॥ तत्र ध्वनि ४३ रणी २० उदाहृतौ । (दल विशरणे), (वल संवरणे), (स्खल सञ्चलने), (त्रपूष् लज्जायाम्)–इति गताः । तेषां णौ–दलयति, वलयति, स्खलयति, त्रपयति । (क्षै क्षये) इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः।क्षपयति॥(स्वन५१अवतंसने)शब्दे इति पठिष्यमाणस्यानुवादः । स्वनयति । अन्यत्र–स्वानयति ॥ ( घटादयो मितः ) । मित्संज्ञा इत्यर्थः ॥ (जनी ५२ जॄष् ५३ क्नसु ५४ रञ्जो ५५ ऽमन्ताश्च ) मित इत्यनुवर्तते । जॄषिति षित्त्वनिर्देशाज्जीर्यतेर्ग्रहणम् । जृणातेस्तु–जारयति । केचित्तु जनी जॄ ष्णसु इति पठित्वा(ष्णसु निरसने) इति दैवादिकमुदाहरन्ति । (ज्वल ५६ ह्वल ५७ ह्मल ५८ नमाम् ५९ अनुपसर्गाद्वा) । एषामित्त्वं वा । प्राप्तविभाषेयम् । ज्वलयति, ज्वल-

यति । उपसृष्टे तु—नित्यं मित्त्वम्—प्रज्वलयति ॥ **कथं तर्हि** प्रज्वालयति, उन्नामयति, इति ॥ **घञन्तात्तत्करोतीति णौ** ॥ **कथं** संक्रामयतीति । ( मितां ह्रस्वः )—इति सूत्रे-(वा चित्तविरागे)—इत्यतो वेत्यनुवर्त्त्य **व्यवस्थितविभाषाश्रयणादिति वृत्तिकृत्** ॥ **एतेन** "रजो विश्रामयन्राज्ञाम्" "धुर्यान्विश्रामयेति सः" इत्यादि **व्याख्यातम्** ॥ ( ग्ला ६० स्ना ६१ वनु ६२ वमां ६३ च ) ॥ अनुपसर्गादेषां मित्त्वं वा स्यात् । आद्ययोरप्राप्ते, इतरयोः **प्राप्ते विभाषा** ॥ ( न कम्यमि ६४–६५ चमाम् ६६ ) ॥ अमन्तत्वात्प्राप्तं मित्त्वमेषां न स्यात् । कामयते । आमयति । चामयति ॥ (शमो ६७ दर्शने)। शाम्यतिर्दर्शने मिन्न स्यात् । निशामयति रूपम् । अन्यत्र तु—" प्रणयिनो निशमय्य वधूः कथाः " ॥ **कथं तर्हि** " निशामय तदुत्पत्तिं विस्तराद्गदतो मम " इति । ( शम आलोचने ) इति **चौरादिकस्य** । धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः—शाम्यतिवत् ॥ ( यम ६८ अपरिवेषणे ) ॥ यच्छतिर्भोजनतोऽन्यत्र मिन्न स्यात् । आयामयति । द्राघयति व्यापारयति वेत्यर्थः । परिवेषणे तु—यमयति ब्राह्मणान् । भोजयतीत्यर्थः । "पर्यवसितं नियमयन्" इत्यादि तु—नियमवच्छब्दात्तत्करोतीति णौ बोध्यम् ॥ ( स्खदि ६९ रवपरिभ्यां च ) मिन्नेत्येव । अवस्खादयति । परिस्खादयति । ( अपावपरिभ्य इति **न्यासकारः** ) । **स्वामी** तु न कमीति नञमुत्तरत्रिसूत्र्यामननुवर्त्य शमः अदर्शने इति **चिच्छेद** । यमस्त्वपरिवेषणे मित्त्व**माह** । **तन्मते** पर्यवसितं नियमयन्नित्यादि सम्यगेव । उपसृष्टस्य स्खदेश्चेदवादिपूर्वस्यैवेति नियमात्प्रस्खादयतीत्य**याह** । तस्मात्सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः फलितः । **इदं च मतं वृत्तिन्यासादिविरोधादुपेक्ष्यम्** ॥ ( फण ७० गतौ ) । नेति निवृत्तम् । असम्भवात् । निषेधात्पूर्वमसौ न पठितः । फणादिकार्यानुरोधात् ॥ **फणां च सप्तानाम्** । ।६।४।१२५॥ एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि, सेटि थलि च । फेणतुः, फेणुः । फेणिथ । पफणतुः, पफणुः । फणयति ॥ वृत् ॥—॥ **घटादिः समाप्तः** ॥—॥ फणेः प्रागेव वृदित्येके । **तन्मते** फाणयतीत्येव ॥ ( राजृ ७१ दीप्तौ )—**स्वरितेत्**—राजति, राजते । रेजतुः, रराजतुः । रेजे, रराजे । ( **अत इत्यनुवृत्तावपि विधानसामर्थ्यादात एत्वम्** ) ॥ ( टुभ्राजृ ७२ टुभ्राशृ ७३ टुभ्लाशृ ७४ दीप्तौ ) **अनुदात्तेतः** । भ्राजतेरिह पाठः फणादिकार्यार्थः । पूर्वं पाठस्तु व्रश्चादिषत्वाभावार्थः । तत्र हि राजिसाहचर्यात् फणादेरेव ग्रहणम् । भ्रेजे, बभ्राजे । वा भ्राशेति श्यन्वा । भ्राश्यते, भ्राशते । भ्रेशे, बभ्राशे । म्लाश्यते, भ्लाशते । म्लेशे, बम्लाशे । द्वावपीमौ तालव्यान्तौ ॥ ( स्यमु १ स्वन २ ध्वन ३ शब्दे )—**स्यमादयः क्षरत्यन्ताः परस्मैपदिनः**—स्येमतुः, सस्यमतुः । अस्यमीव । स्वेनतुः, सस्वनतुः, सस्वनुः, अस्वानीत्, अस्वनीत् । विष्वणति, अवष्वणति । सशब्दं भुङ्क्ते इत्यर्थः । वेश्च स्वन इति षत्वम् ॥ **फणादयो गताः** ॥ दध्वनतुः ॥ ( षम ४ ष्टम ५ अवैकल्ये ) ससाम । तस्ताम ॥ ( ज्वल ६ दीप्तौ )—अज्वालीत् ॥ ( चल ७ कम्पने ) ॥ ( जल ८ घातने )—**घातनं** तैक्ष्ण्यम् ॥ ( टल ९ ट्वल १० वैक्लव्ये ) ॥ ( ष्ठल ११ स्थाने ) ॥ ( हल १२ विलेखने ) ॥ ( णल गन्धे ) बन्धन इत्येके

(पल १४ गतौ)-पलति ॥ (बल १५ प्राणने, धान्यावरोधने च)-बलति। बेलतुः, बेलुः ॥ (पुल१६ महत्त्वे)-पोलति ॥ (कुल १७ संस्त्याने, बन्धुषु च)-**संस्त्यानं** सङ्घातः।बन्धुशब्देन तद्व्यापारो गृह्यते। कोलति। चुकोल ॥ (शल १८ हुल १९ पत्ल२० गतौ)-शशाल। जुहोल। पपात, पेततुः। पतिता ॥ **पतः पुम्।७।४।१९॥** अङि परे। अपप्तत्।नेर्गदेति णत्वम्-प्रण्यपप्तत् ॥(क्वथे२१निष्पाके)-क्वथति। चक्वाथ। अक्वथीत् ॥ (पथे २२ गतौ)-अपथीत् ॥ (मथे २३ विलोडने) मेथतुः। अमथीत्। (टु-वम् २४ उद्गिरणे) इहैव निपातनाद्वृत इत्त्वमिति **सुधाकरः।** ववाम, ववमतुः। वादित्वादेत्त्वाभ्यासलोपौ न। **भागवृत्तौ तु**-वेमतुरित्याद्यप्युदाहृतम् ॥**तद्भाष्यादौ न दृष्टम्** ॥ (भ्रमु २५ चलने) वा भ्राशेति श्यन्वा-भ्रम्यति, भ्रमति। भ्राम्यतीति तु-दिवादौ **वक्ष्यते॥वा जॄभ्रमुत्रसाम्।६।४।१२४॥** एषामेत्त्वाभ्यासलोपौ वा; स्तः किति लिटि, सेटि थलि च। भ्रेमतुः, बभ्रमतुः। अभ्रमीत् ॥ (क्षर २६ सञ्चलने)-अक्षारीत् ॥ **अथ द्वावनुदात्तेतौ** ॥ (षह १ मर्षणे) परिनिविभ्य इति षत्वम्-परिषहते। सेहे। सहिता-तीषसहेति वा इट्। इडभावे ढत्वधत्वष्टुत्वढलोपाः ॥**सहिवहोरो-दवर्णस्य।६।३।११२॥**अनयोरवर्णस्य ओत्स्याड्ढलोपे सति॥**सोढः।८।३।११५॥** सोढ्रूपस्य सहेः सस्य षत्वं न स्यात्। परिसोढा ॥ **सिवादीनां वाऽड्व्यवायेऽपि।८।३।७१॥** परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि। पर्यषहत, पर्यसहत ॥ (रमु २ क्रीडायाम्)-रेमे। रेमिषे। रन्ता। रंस्यते। रंसीष्ट। अरंस्त ॥ **अथ कसन्ताः परस्मैपदिनः**-(षद्लृ १ विशरणगत्यवसादनेषु) ॥ **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छ-पश्यर्च्छधौशीयसीदाः।७।३।७८॥** पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे। सीदति। ससाद, सेदतुः। सेदिथ, ससत्थ। सत्ता। सत्स्यति। लृदित्त्वादङ्-असदत् ॥ (सदिरप्रतेः)-निषीदति, न्यषीदत् ॥ **सदेः परस्य लिटि।८।३।११८॥** सदेरभ्यासात्परस्य षत्वं न स्याल्लिटि। निषसाद। निषेदतुः ॥ (शद्लृ २ शातने)-विशीर्णतायामयम्। शातनं तु विषयतया निर्दिश्यते ॥ **शदेः शितः।१।३।६०॥** शिद्भाविनोऽस्मादात्मनेपदं स्यात्। शीयते। शशाद। शेदतुः। शेदिथ, शशत्थ। शत्ता। अशदत् ॥ (क्रुश ३ आह्वाने, रोदने च) क्रोशति। क्रोष्टा। च्लेः क्सः-अक्रुक्षत् ॥ (कुच४ सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु)-कोचति। चुकोच। (बुध ५ अवगमने)-बोधति। बोधिता। बोधिष्यति ॥ (रुह ६ बीजजन्मनि, प्रादुर्भावे च) रोहति। रुरोह। रुरोहिथ। रोढा। रोक्ष्यति। अरुक्षत् ॥(कस७गतौ)-अकसीत्। अकासीत्। [वृत्]॥**ज्वलादिगणः समाप्तः॥-॥अथ गूहत्यन्ताः स्वरितेतः**-(हिक्क १अव्यक्ते शब्दे)-हिक्कति। हिक्कते ॥ (अञ्चु २ गतौ, याचने च) अञ्चति। अञ्चते ॥ (अचु ३ इत्येके)॥(अचि४ इत्यपरे)॥(टु-याचृ५ याच्ञायाम्)-याचति। याचते ॥ (रेटृ ६ परि-

भाषणे)—रेटति । रेटते ॥ (चते ७ चदे ८ याचने च)—चचात । चेते । अचतीत् । चचाद । चेदे । अचदीत् ॥ (प्रोथृ ९ पर्याप्तौ)—पुप्रोथ । पुप्रोथे ॥ (मिदृ १० मेदृ ११ मेधाहिंसनयोः)—मिमेद । मिमिदे । मिमेदे । (थान्ताविमाविति **स्वामी**) मिमेथ। (धान्ताविति **न्यासः**) (मेधृ १२ सङ्गमे च)—मेधति। मिमेधे ॥ (णिदृ १३ णेदृ १४ कुत्सासन्निकर्षयोः)—निनेद, निनिदतुः। निनिदे ॥ ( शृधु १५ मृधु १६ उन्दने )—**उन्दनं** क्लेदनम् । शर्धति । शर्धते। शर्धिता। मर्धति । मर्धते ॥ ( बुधिर् १७ बोधने )—बोधति । बोधते । इरित्त्वादङ् वा—अबुधत्, अबोधीत्, अबोधिष्ट। दीपजनेति चिण् तु न भवति। **पूर्वोत्तरसाहचर्येण** दैवादिकस्यैव तत्र ग्रहणात् ॥ (उबुन्दिर् १८ निशामने)—बुबुन्दे । अबुदत्, अबुन्दीत् ॥ (वेणृ १९ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु )—वेणति । वेणते ॥ ( नान्तोऽप्ययम् २० ) ॥ ( खनु २१ अवदारणे )—खनति । खनते॥ **गमहनजनखनघसां लोपः क्ङित्यनङि ।६। ४ ।९८॥** एषामुपधाया लोपः स्यादजादौ क्ङिति, न त्वङि। चख्नतुः॥ ( **ये विभाषा ।६।४।४३॥**) खायात्, खन्यात् ॥ ( चीवृ २२ आदानसंवरणयोः) चिचीव । चिचीवे ॥ ( चायृ २३ पूजानिशामनयोः)॥( व्यय २४ गतौ)—अव्ययीत् ॥ (दाशृ २५ दाने)—ददाश । ददाशे ॥ ( भेषृ २६ भये ) गता**वित्येके** । भेषति । भेषते ॥ ( भ्रेषृ २७ भ्लेषृ २८ गतौ)॥ (अस २९ गतिदीप्त्यादानेषु)--असति । असते। आस आसे॥(अयं षान्तोऽपि ३०)॥ ( स्पश ३१ बाधनस्पर्शनयोः) **स्पर्शनं** ग्रथनम् । स्पशति । स्पशते ॥ (लष ३२ कान्तौ ) ।वा भ्राशेति श्यन्वा—लष्यति, लषति। लेषे ॥ (चष ३३ भक्षणे) ॥ (छष ३४ हिंसायाम्)—चच्छषतुः। चच्छषे ॥ (झष ३५ आदानसंवरणयोः) ॥(भ्रक्ष ३६ म्लक्ष ३७ अदने)॥(भक्ष ३८ इति **मैत्रेयः**) ॥ (दासृ ३९ दाने) ॥(माह्ह ४० माने) ॥ (गुहू ४१ संवरणे ) ॥ **ऊदुपधाया गोहः । ६ । ४ । ८९॥** गुह उपधाया ऊत् स्याद्गुणहेतावजादौ प्रत्यये । गूहति । गूहते ( ऊदित्त्वादिड्वा)—गूहिता, गोढा गूहिष्यति, घोक्ष्यति॥गूहेत् । गुह्यात् । अगूहीत्। इडभावे क्सः—अघुक्षत् ॥ **लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये । ७ । ३ । ७३ ॥** एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि ।ढत्वधत्वष्टुत्वढलोपदीर्घाः—अगूढ, अघुक्षत, ( क्सस्याचि)—इत्यन्तलोपः—अघुक्षाताम्, अघुक्षन्त । अगुह्वहि, अघुक्षावहि, अघुक्षामहि। ॥ **अथाजन्ताः उभयपदिनः**— ( श्रिञ् १ सेवायाम् )—श्रयति । श्रयते । शिश्रियतुः । श्रयिता । णिश्रीति चङ्—अशिश्रियत् ॥ ( भृञ् २ भरणे ) —भरति । बभार । बभ्रतुः । बभर्थ । बभृव । बभृषे । भर्ता ॥ **ऋद्धनोः स्ये । ७ । २ । ७० ॥** ऋतो हन्तेश्च स्यस्य इट् स्यात् । भरिष्यति ॥ **रिङ् शयग्लिङ्क्षु । ७ । ४ । २८॥** शे, यकि, यादावार्धधातुके लिङि च, ऋतो रिङादेशः स्यात् (**रीङि प्रकृते रिङ्विधिसामर्थ्याद्दीर्घो न**) भ्रियात्॥**उश्च।१।२।१२॥** ऋवर्णात्परौ झलादी लिङ् तङ्परः सिच इत्येतौ कितौ स्तः। भृषीष्ट, भृषीयास्ताम्। अभार्षीत्, अभार्ष्टाम्, अभार्षुः ॥ **ह्रस्वादङ्गात् ।८।२।२७॥** सिचो लोपः स्याज्झलि । अभृत, अभृषाताम् । अभरिष्यत ॥

(हृञ् ३ हरणे) हरणं—प्रापणं, स्वीकारः, स्तेयं, नाशनं च। जहर्थ। जह्रिव। जह्रिषे। हर्ता। हरिष्यति। (धृञ् ४ धारणे)—धरति। अधार्षीत्। अधृत॥ (णीञ् ५ प्रापणे)—निनयिथ। निन्यिषे॥ **अथाजन्ताः परस्मैपदिनः**—(धेट् १ पाने)—धयति॥ **आदेच उपदेशेऽशिति।** ।६।१।४५॥ उपदेशे एजन्तस्य धातोरात्त्वं स्यान्न तु शिति॥ **आत औ णलः**।७।१।३४॥ आदन्ताद्धातोर्णल औकारादेशः स्यात्। दधौ॥ **आतो लोप इटि च**।६।४।६४॥ अजाद्योरार्धधातुकयोः क्ङितोः, इटि च परतः, आतो लोपः स्यात्। द्वित्वात्परत्वाल्लोपे प्राप्ते द्विर्वचनेऽचीति निषेधाद्द्वित्वे कृते आल्लोपः। दधतुः, दधुः। दधिथ, दधाथ। दधिव, दधिम। धाता॥ **दाधा घ्वदाप्**।१।१।२०॥ दारूपाः, धारूपाश्च, धातवो घुसंज्ञाः स्युः, दाप्दैपौ विना॥ **एर्लिङि**।६।४।६७॥ घुसंज्ञानां, मास्थादीनां च, एत्त्वं स्यादार्धधातुके किति लिङि। धेयात्, धेयास्ताम्, धेयासुः॥ **विभाषा धेट्श्व्योः**।३।१।४९॥ आभ्यां च्लेश्चङ्वा स्यात्कर्तृवाचिनि लुङि परे। (चङि) इति द्वित्वम्—अदधत्, अदधताम्॥ **विभाषा घ्राधेट्शाच्छासः**।२।४।७४॥ एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे। अधात्। अधाताम्, अधुः॥ **यमरमनमातां सक् च**।७।२।७३॥ एषां सगागमस्स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु। अधासीत्, अधासिष्टाम्, अधासिषुः॥ (ग्लै २ म्लै ३ हर्षक्षये)—हर्षक्षयो धातुक्षयः। ग्लायति। जग्लौ। जग्लिथ॥ **वाऽन्यस्य संयोगादेः**।६।४।६८॥ घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्त्वं वा स्यादार्धधातुके क्ङिति लिङि। ग्लायात्। ग्लेयात् अग्लासीत्। म्लायति॥ (द्यै ४ न्यक्करणे)—न्यक्करणं तिरस्कारः॥ (द्रै ५ स्वप्ने)॥ (ध्रै ६ तृप्तौ)॥ (ध्यै ७ चिन्तायाम्)॥ (रै ८ शब्दे)॥ (स्त्यै ९ ष्ट्यै १० शब्दसङ्घातयोः)—स्त्यायति। षोपदेशस्यापि सत्वे कृते रूपं तुल्यम्। षोपदेशफलं तु—तिष्ट्यासति अतिष्ट्यपदित्यत्र षत्वम्। (खै ११ खदने)॥ (क्षै १२ जै १३ षै १४ क्षये)—जजौ। ससौ। घुमास्थेत्यत्र, विभाषा घ्राधेडित्यत्र च, स्यतेरेव ग्रहणं न त्वस्य। तेनैत्त्वसिज्लुकौ न—सायात्। असासीत्॥ (कै १५ गै १६ शब्दे)—गेयात्। अगासीत्॥ (श्रै १७ श्रै १८ पाके)॥ (पै १९ ओवै २० शोषणे)—पायात्। अपासीत्। घुमास्थेतीत्त्वम्, गातिस्थेति सिज्लुक् च, न। पारूपस्य लाक्षणिकत्वात्॥ (ष्टै २१ वेष्टने) स्तायति॥ (ष्णै २२ वेष्टने)—शोभायां चेत्येके। स्नायति। (दैप् २३ शोधने)—दायति। अघुत्वादेत्वसिज्लुकौ न—दायात्। अदासीत्॥ (पा २४ पाने)। पाघ्राध्मेति पिबादेशः। तस्यादन्तत्वान्नोपधागुणः—पिबति। पेयात्। अपात्॥ (घ्रा २५ गन्धोपादाने) जिघ्रति। घ्रायात्, घ्रेयात्। अघ्रासीत्, अघ्रात्॥ (ध्मा २६ शब्दाग्निसंयोगयोः)—धमति॥ (ष्ठा २७ गतिनिवृत्तौ)—तिष्ठति। स्थादिष्वभ्यासेनेति षत्वम्—अधितष्ठौ। उपसर्गादिति षत्वम्—अधिष्ठाता। स्थेयात्॥ (म्ना २८ अभ्यासे) मनति (दाण् २९ दाने) प्रणियच्छति। देयात्। अदात्॥ (ह्वृ ३० कौटिल्ये)

ह्वरति ॥ **ऋतश्च संयोगादेर्गुणः । ७ । ४ । १० ॥** ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि । किदर्थमपीदं परत्वाण्णल्यपि भवति । रपरत्वम्, उपधावृद्धिः–जह्वार, जह्वरतुः, जह्वरुः । जह्वर्थ । ह्वर्ता । ( ऋद्धनोः स्ये )–ह्वरिष्यति ॥ **गुणोऽर्तिसंयोगाद्योः । ७ । ४ । २९ ॥** अर्तेः, संयोगादेर्ऋदन्तस्य च, गुणः स्याद्यकि, यादावार्धधातुके लिङि च - ह्वर्यात् । अह्वार्षीत्, अह्वार्ष्टाम् ॥ ( स्वृ ३१ शब्दोपतापयोः ) । स्वरतिसूतीति वेट् सस्वरिथ, सस्वर्थ । वमयोस्तु–॥ **श्र्युकः किति । ७।२।११ ॥** श्रिञ एकाच उगन्ताच्च परयोर्गित्कितोरिण्न स्यात् । परमपि स्वरत्यादिविकल्पं बाधित्वा **पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन** निषेधे प्राप्ते–क्रादिनियमान्नित्यमिट्–सस्वरिव, सस्वरिम । परत्वादृद्धनोरिति नित्यमिट्–स्वरिष्यति । स्वर्यात् । अस्वारीत्, अस्वारिष्टाम् । अस्वार्षीत्, अस्वार्ष्टाम् ॥ ( स्मृ ३२ चिन्तायाम् ) ॥ ( ह्वृ ३३ संवरणे ) ॥ ( सृ ३४ गतौ ) । क्रादित्वान्नेट्–ससृव ( रिङ् )–स्रियात् असार्षीत्, असार्ष्टाम् ॥ **सर्तिशास्त्यर्तिभ्यश्च । ३।१।५६ ॥** एभ्यश्च्लेरङ् स्यात्कर्तरि लुङि । इह लुप्तश्नपा शासिना **साहचर्यात्सर्त्यर्ती** जौहोत्यादिकावेव गृह्येते तेन भ्वाद्योर्नाङ् । शीघ्रगतौ तु–पाघ्राध्मेति शिति धौरादेशः–धावति ॥ ( ऋ ३५ गतिप्रापणयोः ) । ऋच्छति ॥ **ऋच्छत्यॄताम् । ७।४।११ ॥** तौदादिकऋच्छतेः, ऋधातोः, ॠतां च, गुणः स्याल्लिटि । णलि प्राग्वदुपधावृद्धिः–आर, आरतुः, आरुः ॥ **इडत्त्यर्तिव्ययतीनाम् । ७। २।६६ ॥** अद्, ऋ, व्येञ्, एभ्यस्थलो नित्यमिट् स्यात् । आरिथ । अर्ता । अरिष्यति । अर्यात् । आर्षीत्, आर्ष्टाम् ॥ ( गृ ३६ घृ ३७ सेचने )–गरति । जगार । जगर्थ । जग्रिव । रिङ्–ग्रियात् । अगार्षीत् ॥ ( ध्वृ ३८ हूर्च्छने ) ॥ ( स्रु ३९ गतौ ) सुस्रोथ । सुस्रुव । स्रूयात् । णिश्रीति चङ्–लघूपधगुणादन्तरङ्गत्वादुवङ्–असुस्रुवत् ॥ ( षु ४० प्रसवैश्वर्ययोः )–**प्रसवोऽभ्यनुज्ञानम्** । सुषोथ । सुषविथ । सुषुविव । सोता ॥ **स्तुसुधूञ्भ्यः परस्मैपदेषु । ७ । २ । ७२ ॥** एभ्यः सिच इट् स्यात्परस्मैपदेषु । असावीत् । पूर्वोत्तराभ्यां ञिद्भ्यां **साहचर्यात्सुनोतेरेव** ग्रहणमिति पक्षे–असौषीत् ॥ ( श्रु ४१ श्रवणे ) ॥ **श्रुवः शृ च । ३ । १ । ७४ ॥** श्रुवः शृ इत्यादेशः स्यात्, श्नुप्रत्ययश्च । शपोऽपवादः । श्नोर्ङित्त्वाद्धातोर्गुणो न–शृणोति, शृणुतः ॥ **हुश्नुवोस्सार्वधातुके । ६ । ४।८७ ॥** जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चासंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके । उवङोऽपवादः शृण्वन्ति । शृणोमि, शृण्वः, शृणुवः, शृण्मः, शृणुमः ( शुश्रोथ ) शृणु ( शृणवानि ) शृणुयात् । श्रूयात् ( अश्रौषीत् ) ॥ ( ध्रु स्थैर्ये ) ( दु ४२ द्रु ४३ गतौ )–दुदोथ, दुदविथ ॥ दुद्रोथ, दुद्रविथ ॥ णिश्रीति चङ्–अदुद्रुवत् ॥ ( जि ४४ ज्रि ४५ अभिभवे )–**अभिभवो** न्यूनीकरणं, न्यूनीभवनं च ( आद्ये–सकर्मकः–शत्रून् जयति ) द्वितीये–त्वकर्मकः–अध्ययनात्पराजयते ( अध्येतुं ग्लायतीत्यर्थः ) ( विपराभ्यां जेः )–इति तङ् ) ( पराजेरसोढः ) इत्यपादानत्वम् ॥ **अथ डीङन्ता ङितः**–( ष्मिङ् १ ईषद्धसने )–सिष्मिये ) सिष्मि-

यिद्वे, सिष्मियिध्वे ॥ (गुङ् २ अव्यक्ते शब्दे)—गुवते। जुगुवे ॥ (गाङ्३गतौ)—गाते, गाते, गाते। इट एत्त्वे कृते वृद्धिः—गै। लङ इटि—अगे। गेत, गेयाताम्, गेरन्। गासीष्ट। गाङ्कुटादिसूत्रे इङादेशस्यैव गाङो ग्रहणं, न त्वस्य। तेनाङित्त्वाद्घुमास्थेतीत्त्वं न—आगास्त। आदादिकोऽयमिति **हरदत्तादयः**। फले तु नभेदः ॥ (कुङ् ४ घुङ् ५ उङ्६ङुङ्७शब्दे)। **अन्ये तु**—उङ् ६ कुङ्—खुङ् ४गुङ् ८घुङ्५**इत्याहुः**॥कवते। घवते। अवते। ऊवे—(वार्णादाङ्गं बलीयः)—इत्युवङ्। ततः सवर्णदीर्घः। ओता। ओष्यते।ओषीष्ट। औष्ट। ङवते।जुङुवे। ङोता। (च्युङ्९ज्युङ्१०प्रुङ्११ प्लुङ्१२गतौ) (क्रुङ् १३ इत्येके)॥ (रुङ् १४ गतिरेषणयोः)—रेषणं हिंसा। रुरुवे। रवितासे॥ (धृङ् १५ अवध्वंसने)—धरते। दध्रे॥ (मेङ् १६ मणिदाने)—**प्रणिदानं** विनिमयः, प्रत्यर्पणं च। प्रणिमयते—नेर्गदेति णत्वम्। तत्र (**घुप्रकृतिमाङ्**)—इति पठित्वा ङितो माप्रकृतेरपि ग्रहणस्येष्टत्वात्॥ (देङ् १७ रक्षणे)—दयते॥**दयतेर्दिगि लिटि। ७। ४।९॥ (दिग्यादेशेन द्वित्वबाधनमिष्यते)**इति **वृत्तिः**। दिग्ये॥**स्थाध्वोरिच्च। १।२।१७**॥अनयोरिदादेशः स्यात्, सिच्च कित्स्यात्। अदित। अदिथाः। अदिषि॥ (श्यैङ् १८ गतौ)—श्यायते। शश्ये॥ (प्यैङ् १९ वृद्धौ)—प्यायते। पप्ये। प्याता॥ (त्रैङ् २० पालने)—त्रायते। तत्रे॥(पूङ्२१पवने)—पवते।पुपुवे।पविता॥(मूङ्२२बन्धने) मवते॥ (डीङ् २३ विहायसा—गतौ)—डयते। डिड्ये।डयिता॥ (तॄ २४ प्लवनतरणयोः)॥**ऋत इद्धातोः।७।१।१००**॥ऋदन्तस्य धातोरङ्गस्य इत्स्यात्। (**इत्त्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन**)॥ तरति (ऋच्छत्यृताम्)—इति गुणः। तॄफलेत्येत्त्वम्—तेरतुः, तेरुः॥ **वॄतो वा। ७।२।३८**॥ वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि।तरीता, तरिता। अलिटीति किम्। तेरिथ। हलि चेति दीर्घः—तीर्यात्॥**सिचि च परस्मैपदेषु।७।२।४०**॥ अत्र वॄत इति इटो दीर्घो न। अतारिष्टाम्॥ ॥ **अथाष्टावनुदात्तेतः**—(गुप १ गोपने)॥ (तिज २ निशाने)॥ (मान ३ पूजायाम्)॥ (बध ४ बन्धने)॥ **गुप्तिज्किद्भ्यस्सन्। ३। १। ५॥ मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य। ३। १। ६॥** सूत्रद्वयोक्तेभ्यः सन् स्यान्मानादीनामभ्यासस्येकारस्य दीर्घश्च॥(**गुपेर्निन्दायाम्**)॥ (**तिजेः क्षमायाम्**)॥ (**कितेर्व्याधिप्रतीकारे, निग्रहेऽपनयने, नाशने, संशये च**)॥ (**मानेर्जिज्ञासायाम्**)॥ (**बधेश्चित्तविकारे**)॥(**दानेरार्जवे**)॥(**शानेर्निशाने**)॥सनाद्यन्ता इति धातुत्वम्॥ **सन्यङोः। ६। १। ९॥** सन्नन्तस्य, यङन्तस्य च, प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य।अभ्यासकार्यम्। गुपिप्रभृतयः किद्भिन्ना निन्दाद्यर्थका एवा**नुदात्तेतः**॥दानशानौ च **स्वरितेतौ**।एते नित्यं सन्नन्ताः। अर्थान्तरे त्वननुबन्धकाश्चुरादयः। (**अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्तङ्**)॥धातोरित्यविहितत्वात्सनोऽत्र नार्धधातुकत्वम्।तेनेड्गुणौ न-जुगुप्सते, जुगुप्साञ्चक्रे, तितिक्षते, मीमांसते॥ भष्भावः।चर्त्वम्—

बीभत्सते ॥(रभ५राभस्ये)—आरभते । आरेभे । रब्धा । रप्स्यते ॥ ( डुलभष् ६ माप्तौ ) लभते ॥ (ष्वञ्ज ७ परिष्वङ्गे ) ॥ **दंशसञ्जस्वञ्जां शपि** ।६।४।२५॥ **रञ्जेश्च** । ६। । ४ । २६ ॥ एषां शपि नलोपः । स्वजते।परिष्वजते। (**श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वा**)इति **व्याकरणान्तरम्**॥देभतुः। सस्वज इति भाष्योदाहरणादेक-देशानुमत्या इहाप्याश्रीयते।(सदेःपरस्य लिटि)—इति सूत्रे—(**स्वञ्जेरुपसंख्यानम्**॥अतो-ऽभ्यासात्परस्य षत्वं न—परिषस्वजे, परिषस्वञ्जे।सस्वजिषे, सस्वञ्जिषे । स्वङ्क्ता।स्वङ्क्ष्यते। स्वजेत।स्वङ्क्षीष्ट । प्रत्यष्वङ्क्त—प्राक्सितादिति षत्वम् । परिनिविभ्यस्तु सिवादीनां वेति विकल्पः।एतदर्थमेवोपसर्गात्सुनोतीत्येव सिद्धे स्तुस्वञ्ज्योः परिनिवीत्यत्र पुनरुपादानम् । पर्यष्वङ्क्त, पर्यस्वङ्क्त ॥ (हद ८ पुरीषोत्सर्गे)—हदते ।जहदे।हत्ता ।हत्स्यते।हदेत।हत्सीष्ट । अहत्त ॥ ॥ **अथ परस्मैपदिनः**—(ञि—ष्विदा१अव्यक्ते शब्दे)॥ (स्कन्दिर्२गतिशोष-णयोः )—चस्कन्दिथ, चस्कन्थ । स्कन्ता । स्कन्त्स्यति।नलोपः—स्कद्यात् ।इरित्वादङ् वा—अस्कदत्, अस्कान्त्सीत्, अस्कान्ताम्, अस्कान्त्सुः ॥ **वेस्कन्देरनिष्ठायाम्** । ८। । ३ । ७३ ॥ षत्वं वा स्यात् । **कृत्येवेदम्** । अनिष्ठायामिति पर्युदासात् । विष्कन्ता, विस्कन्ता । निष्ठायां तु—विस्कन्नः ॥ **परेश्च** । ८ । ३ । ७४ ॥ अस्मात्परस्य स्कन्देः स्सस्य षो वा । योगविभागादनिष्ठायामिति न संबध्यते । परिष्कन्दति, परिस्कन्दति । परिस्कन्नः, परिष्कण्णः । षत्वपक्षे णत्वम्॥**न च** पदद्वयाश्रतया बहिरङ्गत्वात् षत्वस्या-सिद्धत्वम्। **धातूपसर्गयोः कार्यमन्तरङ्गम्**—इत्यभ्युपगमात्। **पूर्वं धातुरुपसर्गेण युज्यते, ततः साधनेन**—इति भाष्यम् । पूर्वं साधनेनेति **मतान्तरे** तु—न णत्वम्॥ (यभ ३ मैथुने)—येभिथ, ययब्ध । यब्धा । यप्स्यति।अयाप्सीत् ॥ (णम४प्रह्वत्वे शब्दे च)—नेमिथ। ननन्थ ।नन्ता । अनंसीत्, अनंसिष्टाम् ॥ ( गम्लृ ५सृप्लृ६गतौ)॥**इषुगमियमां छः** । ७ । ३ । ७७ ॥ एषां छः स्याच्छिति परे । गच्छति । जगाम, जग्मतुः, जग्मुः । जगमिथ, जगन्थ । गन्ता ॥ **गमेरिट् परस्मैपदेषु** । ७ । २ । ५८ ॥ गमेः परस्य सकारादेरार्धधातुकस्येट्स्यात् परस्मैपदेषु।गमिष्यति।लृदित्वादङ्।अनङीति पर्युदासान्नोपधा लोपः—अगमत् ॥ सर्पति । ससर्प ॥ **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्**। ६। १ । ५९ ॥ उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति परे । स्रप्ता, सर्प्ता । स्रप्स्यति, सर्प्स्यति, । असृपत् ॥ (यम ७ उपरमे )—यच्छति । येमिथ, ययन्थ । यन्ता । अयंसीत्, अयंसिष्टाम् ॥ ( तप ८ सन्तापे )—तप्ता । अताप्सीत् ॥ **निसस्तपतावनासेवने** । ८ । ३ । १०२ ॥ षः स्यात् । **आसेवनं** पौनः पुन्यम् । ततोऽन्यस्मिन्विषये । निष्टपति ॥ ( त्यज ९ हानौ )—तत्यजिथ, तत्यक्थ । त्यक्ता । अत्याक्षीत् ॥ ( षञ्ज १० सङ्गे )—दंशसञ्जस्वञ्जां शपीति नलोपः—सजति । सङ्क्ता ॥ ( दृशिर् ११ प्रेक्षणे)—पश्यति ॥ **विभाषा सृजिदृशोः** । ७ । २ ।६५॥ आभ्यां थल इड्वा ॥ **सृजिदृशोर्झल्यमकिति** । ६ । १ । ५८ ॥ अनयोरमागमः

स्याज्झलादावकिति । ददष्ठ, दर्दर्शिथ । द्रष्टा । द्रक्ष्यति । दृश्यात् । इरित्त्वादङ् ॥ **ऋदृशोऽङि गुणः । ७ । ४ । १६ ॥** ऋवर्णान्तानां दृशेश्च गुणः स्यादङि । अदर्शत् । अङभावे ॥ **न दृशः । ३ । १ । ४७ ॥** दृशश्च्लेः क्सो न । अद्राक्षीत् । ( दंश १२ दशने )–**दशनं** दंष्ट्राव्यापारः । पृषोदरादित्वादनुनासिकलोपः । अत एव निपातनादित्येके । तस्याप्यत्रैव तात्पर्यम् । **अर्थनिर्देशस्याऽऽधुनिकत्वात्** ।दंशसञ्जेति नलोपः–दशति । ददंशिथ, ददंष्ठ । दंष्टा । दङ्क्ष्यति । दश्यात् अदाङ्क्षीत् ॥ ( कृष १३ विलेखने )–**विलेखन**माकर्षणम् । क्रष्टा, कर्ष्टा । क्रक्ष्यति, कर्क्ष्यति । ( **स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः** ) ॥ अक्राक्षीत्, अक्राष्टाम् । अकार्क्षीत्, अकार्ष्टाम्, अकार्क्षुः । पक्षे क्सः–अकृक्षत्, अकृक्षताम्, अकृक्षन् ॥ ( दह १४ भस्मीकरणे ) देहिथ, ददग्ध । दग्धा । धक्ष्यति । अधाक्षीत्, अदाग्धाम्, अधाक्षुः ॥ ( मिह १५ सेचने )–मिमेह । मिमेहिथ । मेढा । मेक्ष्यति । अमिक्षत् ॥ ( कित १६ निवासे रोगापनयने च )–चिकित्सति । संशये प्रायेण विपूर्वः । "विचिकित्सा तु संशयः" इत्यमरः । अस्यानुदात्तत्वमाश्रित्य चिकित्सते इत्यादि **कश्चिदुदाजहार** । निवासे तु केतयति ॥ ( दान १ खण्डने ) ( शान २ तेजने ) **इतो वहत्यन्ताः स्वरितेतः**–दीदांसति, दीदांसते । शीशांसति, शीशांसते । अर्थविशेषे सन् । अन्यत्र दानयति, शानयति ॥ ( डु–पचष् ३ पाके ) पचति, पचते । पचिथ, पपक्थ । पेचे, पक्ता, पक्षीष्ट ॥ ( षच ४ समवाये )–सचति, सचते ॥ ( भज ५ सेवायाम् )–बभाज, भेजतुः, भेजुः।भेजिथ, बभक्थ । भक्ता । भक्ष्यति, भक्ष्यते । अभाक्षीत्, अभक्त ॥ ( रञ्ज ६ रागे ) । नलोपः–रजति, रजते । अराङ्क्षीत्, अरङ्क्त ॥ ( शप ७ आक्रोशे ) **आक्रोशो** विरुद्धानुध्यानम् । शशाप, शेपे । अशाप्सीत्, अशप्त ॥ ( त्विष ८ दीप्तौ )–त्वेषति, त्वेषते । तित्विषे । त्वेक्ष्यति । त्विक्षीष्ट । अत्विक्षत, अत्विक्षाताम् ॥ ( यज ९ देवपूजासङ्गतिकरणदानेषु )–यजति, यजते ॥ **लिट्यभ्यासस्योभयेषाम् । ६ । १ । १७ ॥** वच्यादीनां, ग्रह्यादीनां च अभ्यासस्य सम्प्रसारणं स्याल्लिटि । इयाज॥ **वचिस्वपियजादीनां किति । ६ । १ । १५ ॥** वचिस्वप्योर्यजादीनां च सम्प्रसारणं स्यात्किति । **पुनःप्रसङ्गविज्ञानाद्–द्वित्वम्**–ईजतुः, इजुः । इयजिथ, इयष्ठ । ईजे । यष्टा । यक्ष्यति । इज्यात्, यक्षीष्ट । अयाक्षीत्, अयष्ट ॥ ( डु–वप् १० बीजसन्ताने )–**बीजसन्तानं** क्षेत्रे विकिरणं, गर्भाधानं च । अयं **छेदनेऽपि**–केशान्वपति । उवाप, ऊपे । वप्ता । उप्यात्, वप्सीष्ट । अण्यवाप्सीत्, अवप्त, ॥( वह ११ प्रापणे )–उवाह । उवहिथ, ( सहिवहोरोदवर्णस्य )–उवोढ, ऊहे । वोढा । वक्ष्यति । अवाक्षीत्, अवोढाम्, अवाक्षुः । अवोढ, अवक्षाताम्, अवक्षत । अवोढाः अवोढ्वम् ॥ ( वस १२ निवासे )–**परस्मैपदी**–वसति उवास ॥ **शासिवसिघसीनां च । ८ । ३ । ६० ॥** इण्कुभ्यां परस्यैषां सस्य षः स्यात् । ऊषतुः, ऊषुः । उवसिथ, उवस्थ । वस्ता॥

**सस्यार्धधातुके** । ७ । ४ । ४९ ॥ सस्य तः स्यात्सादावार्धधातुके । वत्स्यति । उष्यात् । अवात्सीत्, अवात्ताम् ॥ ( वेञ् १३ तन्तुसन्ताने ) वयति, वयते ॥ **वेञो वयिः** । २ । ४ । ४१ ॥ वा स्याल्लिटि । इकार उच्चारणार्थः—उवाय ॥ **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** । ६ । १।१६॥ एषां किति, ङिति च, सम्प्रसारणं स्यात् । यकारस्य प्राप्ते ॥ **लिटि वयो यः** । ६ । १ । ३८ ॥ वयो यस्य सम्प्रसारणं न स्याल्लिटि । ऊयतुः, ऊयुः ॥ **वश्चास्यान्यतरस्यां किति** । ६ । १ । ३९ ॥ वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः, ऊवुः । वयेस्तासावभावात्थलि नित्यमिट्—उवयिथ । स्थानिवद्भावेन ञित्वात्तङ्—ऊये, ऊवे । वयादेशाभावे—॥ **वेञः** । ६ । १ । ४० ॥ वेञो न सम्प्रसारणं स्याल्लिटि । ववौ, ववतुः, ववुः । वविथ, ववाथ । ववे । वाता । ऊयात्, वासीष्ट । अवासीत् ॥ ( व्येञ् १४ संवरणे )—व्ययति ॥ **न व्यो लिटि** । ६ । १ । ४६ ॥ व्येञ आत्त्वं न स्याल्लिटि । वृद्धिः । (**परमपिहलादिःशेषं बाधित्वा यस्य सम्प्रसारणम्** । उभयेषां ग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे किं तेन। विव्याय, विव्यतुः, विव्युः । इडत्यर्तीति नित्यमिट्—विव्ययिथ । विव्याय, विव्यय । विव्ये । व्याता । वीयात्, व्यासीष्ट । अव्यासीत्, अव्यास्त ॥ ( ह्वेञ् १५ स्पर्द्धायां शब्दे च ) ॥ **अभ्यस्तस्य च** । ६ । १।३३॥ अभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं स्यात् । ततो द्वित्वम्—जुहाव, जुहुवतुः, जुहुवुः । जुहविथ । जुहुवे । ह्वाता । हूयात्, ह्वासीष्ट ॥ **लिपिसिचिह्वश्च** । ६ । १ । ५४ ॥ एभ्यश्च्लेरङ् स्यात् ॥ **आत्मनेपदेष्वन्यतरस्याम्** । ३ । १ । ५४ ॥ ( आतो लोपः )—अह्वत्, अह्वत, अह्वास्त ॥ अथ **द्वा परस्मैपदिनौ**—( वद१ व्यक्तायां वाचि )—अच्छवदति उवाद, ऊदतुः । उवदिथ । वदिता । उद्यात् । वदव्रजेति वृद्धिः—अवादीत् ॥ ( टु—ओश्वि २ गतिवृद्ध्योः )—श्वयति ॥ **विभाषा श्वेः** । ६ । १ । ३० ॥ श्वयतेः सम्प्रसारणं वा स्याल्लिटि यङि च । शुशाव, शुशुवतुः । ( **श्वयतेर्लिटचभ्यासलक्षणप्रतिषेधः** ) ॥ तेन लिट्यभ्यासस्येति सम्प्रसारणं न—शिश्वाय, शिश्वियतुः । श्वयिता । श्वयेत् । शूयात् । जॄस्तम्भिवत्यङ् वा ॥ **श्वयतेरः** । ७ । ४ । १८ ॥ श्वयतेरिकारस्य अकारः स्यादङि । पररूपम्—अश्वत्, अश्वताम्, अश्वन् । ( विभाषा धेट्श्व्योः ) इति चङ् । इयङ्—अशिश्वियत् । ह्म्यन्तेति न वृद्धिः—अश्वयीत् । ॥ ( **वृत्** )—यजादयो वृत्ताः । भ्वादिस्त्वाकृतिगणः ॥ तेन चुलुम्पतीत्यादिसंग्रहः ॥ **इति भ्वादयः** ॥

**ऋतेरीयङ्** ।३।१।२९॥(ऋतिः सौत्रोधातुः) तस्मादीयङ् स्यात् स्वार्थे । जुगुप्सायामयं धातुरिति **बहवः** ।कृपायां चेत्येके। सनाद्यन्ता इति धातुत्वम् । ऋतीयते। ऋतीयाञ्चक्रे ।

( आयादय आर्धधातुके वा )-इतीयङभावे शेषात्कर्त्तरीति परस्मैपदम्-आनर्त । अर्तिष्यति । आर्तीत् ॥ ॥ इति भ्वादयः ॥

॥ अथाऽदादयः ॥

( अद१भक्षणे )-द्वौ परस्मैपदिनौ ॥ **अदिप्रभृतिभ्यश्शपः । २ । ४।७२ ॥** लुक् स्यात् । अत्ति, अत्तः, अदन्ति ॥ **लिट्यन्यतरस्याम् । २ । ४ । ४० ॥** अदो घस्ऌ वा स्याल्लिटि । जघास । गमहनेत्युपधालोपः । तस्य चर्विधिं प्रति स्थानिवद्भाव-निषेधाद् घस्य चर्त्वम् । शासिवसीति षत्वम्-जक्षतुः, जक्षुः । घसेस्तासावभावात्थलि नित्यमिट्-जघसिथ । आद, आदतुः । इडत्त्यर्तीति नित्यमिट्-आदिथ । अत्ता । अत्स्यति॥ **हुझल्भ्यो हेर्धिः।६।४।१०१॥**होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि; अत्तात्। अदानि॥ **अदः सर्वेषाम्।७।३।१००॥** अदःपरस्यापृक्तसार्वधातुकस्याडागमः स्यात्सर्वमतेन । आदत्, आत्ताम्, आदन् । आदः, आत्तम्, आत्त । आदम्, आद्व, आद्म । अद्यात्, अद्या-ताम्, अद्युः । अद्यात्, अद्यास्ताम्, अद्यासुः ॥**लुङ्सनोर्घस्ऌ ।२।४।३७ ॥** अदो घस्ऌ स्यात्-लुङि,सनि च । ऌदित्त्वादङ्-अघसत् ॥ (हन२हिंसागत्योः )-प्रणिहन्ति ॥ **अनु-दात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ।६।४।३७॥** अनुनासिकेति लुप्तषष्ठीकं वनतीतरेषां विशेषणम् । अनुनासिकान्तानामेषां, वनतेश्च, लोपः स्याज्झलादौ क्ङिति परे । यमि, रमि, गमि, नमि, हनि,मन्यतयोऽ**नुदात्तोपदेशाः**।तनु, षणु, क्षणु, क्षिणु, ऋणु, तृणु, घृणु, वनु, मनु, **तनोत्यादयः**।हतः, घ्नन्ति॥**वमोर्वा**।८।४। । २३॥उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्याद्वमयोः परयोः । प्रहण्मि, प्रहन्मि, प्रहण्वः, प्रहन्वः । होहन्तेरिति कुत्वम्-जघान, जघ्नतुः जघ्नुः ॥ **अभ्यासाच्च । ७।३। ५५॥**अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ, जघन्थ । हन्ता । ऋद्धनोरितीट्-हनिष्यति । हन्तु, हतात्, हताम्, घ्नन्तु ॥ **हन्तेर्जः । ६ । ४। ३६ ॥** हौ परेऽभी-यतया जस्यासिद्धत्वाद्धेर्न लुक्-जहि । हनानि, हनाव, हनाम । अघ्नन् । अहनम् ॥ **आर्धधातुके । २ । ४ । ३५ ॥** इत्यधिकृत्य ॥ **हनो वध लिङि । २ । ४ । ४२ ॥ लुङि च । २ । ४ । ४३ ॥** वधादेशोऽदन्तः। आर्धधातुक इति विषयसप्तमी। तेनार्धधातुकोपदेशे अकारान्तत्वाद् ( अतो लोपः )-वध्यात्, वध्यास्ताम् । आर्धधातुके किम् । विध्यादौ-हन्यात् । ( हन्तेः )-इति णत्वम्-प्रहण्यात् । अल्लोपस्य स्थानिव-त्त्वादतो हलादेरिति न वृद्धिः-अवधीत् ॥-॥ **अथ चत्वारः स्वरितेतः**-( द्विष१अप्रीतौ )-द्वेष्टि, द्विष्टे । द्वेष्टा । द्वेक्ष्यति । द्वेष्टु । द्विष्टात् । द्विड्ढि । द्वेषाणि, द्वेषावहै । अद्वेट् ॥ **द्विषश्च । ३ । ४ । ११२ ॥** लङो झेर्जुस्वा स्यात् । अद्विषु अद्विषन् । अद्वेषम् । द्विषीत, द्विक्षीष्ट । अद्विक्षत् ॥ ( दुह २ प्रपूरणे)-दुग्धः । धुक्षे । धुग्ध्वे । दोग्धु । दुग्धि।दोहानि।धुक्ष्व।धुग्ध्वम् । दोहै । अधोक् । अदोहम् । अधुग्ध्वम् । अधुक्षत्, अधुक्षत।लुग्वां दुहेति लुक्पक्षे-त,थास्,ध्वं, वहिषु लङ्वदपि॥(दिह२उपचये)-प्रणि-देग्धि ॥ (लिह ५ आस्वादने)-लेढि, लीढः, लिहन्ति । लेक्षि । लीढे । लिक्षे । लीढ्वे ।

लेढु।लीढि।लेहानि।अलेट्।अलिक्षत्।अलिक्षत, अलीढ ।अलिक्षाताम् । अलिक्षावहि, अलिह्वहि (चक्षिङ् ५ व्यक्तायां वाचि)अयं **दर्शनेपि** । इकारोऽनुदात्तो युजर्थः—विचक्षणः मथयन् । नुम् तु न । अन्तेदित इति व्याख्यानात् ॥ ङकारस्तु—**(अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यम्)**—इति ज्ञापनार्थः।तेन स्फायन्निर्मोकसन्धीत्यादि सिध्यति । चष्टे, चक्षाते ॥ (आर्धधातुके)—इत्यधिकृत्य॥**चक्षिङः ख्याञ्**।२।४।५४॥**वा लिटि**।२।४।५५॥ अत्र भाष्ये ख्शादिरयमादेशः । असिद्धकाण्डे—(शस्य यो वा)—इति स्थितम्। ञित्त्वात्पदद्वयम्। चख्यौ, चक्शौ, चख्ये । चक्शे । चयो द्वितीया इति तु न।चर्त्वस्यासिद्धत्वात् । चचक्षे । ख्याता, क्शाता । ख्यास्यति,ख्यास्यते।क्शास्यति, क्शास्यते,।अचष्ट,।चक्षीत,।ख्यायात्। क्शायात्, क्शेयात्॥**अस्यतिवक्तिख्यातिभ्योऽङ्** । ३ । १ ।५२॥ एभ्यश्च्लेरङ् । अख्यत्, अख्यत, अक्शास्त ॥ **( वर्जने ख्शाञ् नेष्टः )** ॥ समचक्षिष्टेत्यादि ॥—॥

**अथ पृच्यन्ता अनुदात्तेतः**॥(ईर१गतौ, कम्पने च) ईर्ते । ईराश्चक्रे । ईर्ताम् । ईर्ष्व । ईर्ध्वम् । ऐरिष्ट॥(ईड २ स्तुतौ )—ईट्टे॥**ईशस्से**।७।२।७७॥**ईडजनोर्ध्वे च** । ७ ।२। । ७८ ॥ ईशीड्जनां, सेध्वेशब्दयोः सार्वधातुकयोरिट् स्यात् । योगविभागो वैचित्र्यार्थः। ईडिषे । ईडिध्वे । **एकदेशविकृतस्यानन्यत्वात्**—ईडिष्व,ईडिध्वम् । **विकृतिग्रहणेन प्रकृतेरग्रहणात्**—ऐड्ध्वम् ॥ ( ईश ३ ऐश्वर्ये )—ईष्टे । ईशिषे । ईशिध्वे ॥ ( आस ४ उपवेशने )—आस्ते ( दयायासश्च )—आसाञ्चक्रे । आस्स्व । आध्वम् । आसिष्ट॥ ( आङः—शासु५ इच्छायाम्)—आशास्ते । आशासाते । आङ्पूर्वत्वं मायिकम्। तेन नमोवाकं प्रशास्महे इति सिद्धम् ॥ ( वस ६ आच्छादने )—वस्ते । वस्से । वध्वे । ववसे । वसिता ॥ ( कसि ७ गतिशासनयोः )—कंस्ते, कंसाते, कंसते ॥ ( अयमनिदिदित्येके ८ )—कस्ते ॥ ( ताल्व्यान्तोऽप्यनिदित् ९ )—कष्टे, कशाते । कक्षे । कड्ढ्वे ॥ ( णिसि१०चुम्बने)—निंस्ते । दन्त्यान्तोऽयम्।**आभरणकारस्तु** ताल्व्यान्त इति बभ्राम। ( णिजि ११ शुद्धौ )—निङ्क्ते । निङ्क्षे । निञ्जिता ॥ ( शिजि १२ अव्यक्ते शब्दे)—शिङ्क्ते ॥ ( पिजि १३ वर्णे )—सम्पर्चने **इत्येके** । उभयत्रेत्यन्ये। अवयवे **इत्यपरे** । पिङ्क्ते ॥ ( पृजीइत्येके १४ ) पृंक्ते ॥ ( वृजी १५ वर्जने )—दन्तोष्ठयादिः । ईदित् । वृक्ते, वृजाते । वृक्षे ॥ (इदिदित्यन्ये१६)—वृङ्क्ते ॥ (पृची१७सम्पर्चने) पृङ्क्ते॥(षूङ्१८प्राणिगर्भविमोचने)—सूते । सुषुवे । सेता। सविता । भूसुवोरिति गुणनिषेधः—सुवै । सविषीष्ट । असविष्ट, असोष्ट ॥ ( शीङ् १९ स्वप्ने)॥**शीङस्सार्वधातुके गुणः** । ७ ।४।२१॥ ( क्ङिति च )—इत्यस्यापवादः।शेते, शयाते॥**शीङो रुट्**।७।१।६॥ शीङः परस्य झादेशस्यातो रुडागमः स्यात् । शेरते । शेषे । शेध्वे । शये । शेवहे । शिश्ये । शयिता । अशयिष्ट ॥ ॥ **अथ स्तौत्यन्ताः परस्मैपदिनः** ॥ ऊर्णुस्तूभयदी ॥ ( यु १मिश्रणेऽमिश्रणे च ) ॥ **उतो वृद्धिर्लुकि हलि** । ७ । ३ । ८९ ॥ लुग्विषये उकारस्य वृद्धिः स्यात्पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य । यौति, युतः, युवन्ति । युयाव । यविता । युयात् । इह उतो वृद्धिर्न ।

भाष्ये–(**पिच्च ङिन्न ङिच्च पिन्न**)–**इति** व्याख्यानात्। विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधात् । यूयात् । अयावीत्॥ ( रु २शब्दे )॥**तुरुस्तुशम्यमस्सार्वधातुके।७।३।९५॥**एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड्वा स्यात् । नाभ्यस्तस्येत्यतोऽनुवृत्तिसंभवे पुनः सार्वधातुकग्रहणमपिदर्थम्। रवीति, रौति, रुवीतः, रुतः।हलादेः किम्। रुवन्ति। तिङः किम्।शाम्यति । सार्वधातुके किम् । आशिषि रूयात्।विध्यादौ तु–रुयात्।रुवीयात्। अरविष्यत्॥(तु ३इति सौत्रो धातुर्गतिवृद्धिहिंसासु)–अयं च लुग्विकरण इति **स्मरन्ति।** तवीति, तौति, तुवीतः, तुतः। तोता । तोष्यति ॥ (णु४ स्तुतौ)–नौति।नविता॥(टु-क्षु ५ शब्दे )–क्षौति । क्षविता ॥ ( क्ष्णु ६ तेजने )–क्ष्णौति । क्ष्णविता ॥ (ष्णु ७प्रस्रवणे ) स्नौति । सुस्नाव । स्नविता ।स्नूयात्॥( ऊर्णुञ्८आच्छादने )॥**ऊर्णोतेर्विभाषा।७।३।९०॥** वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके। ऊर्णौति, ऊर्णोति, ऊर्णुतः, ऊर्णुवन्ति।ऊर्णुते, ऊर्णुवाते, ऊर्णुवते। **(ऊर्णोतेराम्नेति वाच्यम्) नन्द्राःसंयोगादयः६।१।३॥** अचः पराः संयोगादयो नदराः द्विर्न भवन्ति । नुशब्दस्य द्वित्वम् णस्यासिद्धत्वात्। **(पूर्वत्रासिद्धीयमद्विर्वचने)**–इति त्व**नित्यम्।** (उभौ साभ्यासस्य) इति लिङ्गात् ॥ ऊर्णुनाव, ऊर्णुनुवतुः, ऊर्णुनुवुः॥ **विभाषोर्णोः।१।२।३॥** इडादिप्रत्ययो वा ङिद् स्यात् ।ऊर्णुनुविथ, ऊर्णुनविथ। ऊर्णुविता, ऊर्णविता। ऊर्णोतु, ऊर्णौतु, ऊर्णवानि ऊर्णवै॥**गुणोऽपृक्ते।७।३।९१॥**ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके।वृद्ध्यपवादः । और्णोत्, और्णोः ।ऊर्णुयात्। ऊर्णुयाः ।इह वृद्धिर्न।**ङिच्च पिन्नेति** भाष्यात् । ऊर्णूयात्, ऊर्णविषीष्ट, ऊर्णुविषीष्ट। और्णुवीत्, और्णुविष्टाम्॥ **ऊर्णोतेर्विभाषा।७।२।६॥** इडादौ सिचि परस्मैपदे परे वा वृद्धिः स्यात् । पक्षे गुणः । और्णावीत्, और्णाविष्टाम्, और्णाविषुः। और्णवीत्, और्णविष्टाम् ॥ (द्यु ९ अभिगमने)–द्यौति । द्योता॥ (षु१० प्रसवैश्वर्ययोः) प्रसवोऽभ्यनुज्ञानम्। सोता। असौषीत् ॥ (कु११ शब्दे)–कोता ॥ (ष्टुञ् १२ स्तुतौ) स्तौति, स्तवीति, स्तुते । स्तुवीते। स्तुसुधूञ्भ्य इतीट्–अस्तावीत् । प्राक् सितादिति षत्वम्–अभ्यष्टौत् । सिवादीनां वा–पर्यष्टौत्, पर्यस्तौत् ॥ ( ब्रूञ् १३व्यक्तायां वाचि ) ॥ **ब्रुवः पञ्चानामादित आहो ब्रुवः।३।४।८४॥** ब्रुवो लटः परस्मैपदानामादितः पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः। अकार उच्चारणार्थः। आह, आहतुः, आहुः ॥ **आहस्थः।८।२।३५॥** झलि परे । चर्त्वम्–आत्थ, आहथुः ॥ **ब्रुव ईट्।७।३।९३॥** ब्रुवः परस्य हलादेः पित ईट् स्यात्। आत्थेत्यत्र स्थानिवद्भावात्प्राप्तोऽयं झलीति थत्वविधानान्न भवति। ब्रवीति, ब्रूतः, ब्रुवति। ब्रूते। आर्धधातुकाधिकारे॥ **ब्रुवो वचिः।२।४।५३॥** उवाच, ऊचतुः, ऊचुः। उवचिथ, उवक्थ। ऊचे। वक्ता। ब्रवीतु, ब्रूतात्–**ङिच्च पिन्नेत्य**पित्त्वादीण् न। ब्रवाणि। ब्रवै। ब्रूयात्, उच्यात्। अस्यतिवक्तीत्यङ् ॥ **वच उम्।७।४।२०॥** अङि परे । अवोचत्, अवोचत।

**अथ शास्यन्ताः परस्मैपदिनः**–( इङ् त्वात्मनेपदी ) ॥ (इण् १ गतौ )

एति, इतः ॥ **इणो यण्** । ६ ।४।८१॥ अजादौ प्रत्यये परे । इयङोऽपवादः । यन्ति। इयाय॥**दीर्घ इणः किति** । ७४ ।६९॥ इणोऽभ्यासस्य दीर्घः स्यात्किति लिटि। ईयतुः, ईयुः । इययिथ, इयेथ । ऐत्, ऐताम्, आयन् । इयात् । ईयात् ॥ **एतेर्लिङि** । ७ । ४ । २४ ॥ उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि । निरियात् । **( उभयत आश्रयणे नान्तादिवत्)** –अभीयात् । अणः किम् । समेयात् । समीयादिति प्रयोगस्तु भौवादिकस्य ॥ **इणो गा लुङि** ।२।४।४५॥ गातिस्थेति सिचो लुक्- अगात्, अगाताम्, अगुः॥(इङ् २ अध्ययने)–नित्यमधिपूर्वः । अधीते, अधीयाते,अधीयते॥ **गाङ् लिटि** ।२।४।४९॥ इङो गाङ् स्याल्लिटि–लावस्थायां विवक्षिते वा । अधिजगे, अधिजगाते अधिजगिरे । अध्येता, अध्येष्यते ।अध्ययै। गुणायादेशयोः । कृतयोरुपसर्गस्य यण् । **पूर्वं धातुरुपसर्गेण–इति दर्शने (अन्तरङ्गत्वाद् गुणात्पूर्वं सवर्णदीर्घः प्राप्तः–णेरध्ययने वृत्तमिति निर्देशान्न भवति )** । अध्यैत । परत्वादियङ् । तत आट् । वृद्धिः–अध्यैयाताम् । अध्यैयि, अध्यैवहि । अधीयीत, अधीयीयाताम् । अधीयीध्वम् । अधीयीय । अध्येषीष्ट ॥ **विभाषा लुङ्लृङोः** । २ । ४ । ५० ॥ इङो गाङ् वा स्यात् ॥ **गाङ्कुटादिभ्योऽञ्णिन्ङित्** । १ । २ । १ ॥ गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः॥ **घुमास्थागापाजहातिसां हलि** । । ६ । ४ । ६६ ॥ एषामात ईत्स्यात् हलादौ क्ङित्यार्धधातुके । अध्यगीष्ट, अध्यैष्ट । अध्यगीष्यते, अध्यैष्यत ॥ ( इक् ३ स्मरणे )–अयमप्यधिपूर्वः । अधीगर्थदयेशामिति लिङ्गात् । अन्यथाहीगर्थेत्येव ब्रूयात् ॥ **इण्वदिक इति वक्तव्यम्** ॥ अधियन्ति । अध्यगात् । **केचित्तु**–आर्धधातुकाधिकारोक्तस्यैवातिदेशमा**हुः** ॥ **तन्मते** यण् न । तथा च भट्टिः–ससीतयो राघवयोरधीयन्निति ॥ ( वी ४ गतिव्याप्तिप्रजनकान्त्यसनखादनेषु ) **प्रजनं**–गर्भग्रहणम् । **असनं**–क्षेपणम् । वेति, वीतः, वियन्ति । वेषि । वेमि । वीहि । अवेत्, अवीताम्, अवियन् । अडागमे सत्यनेकाच्त्वाद्यणिति **केचित्**–अव्यन् ॥ अत्र–( ईकारोऽपि ५ धात्वन्तरं प्रश्लिष्यते )–एति, ईतः, इयन्ति । ईयात् । ऐषीत् ॥( या ६ प्रापणे )–प्रापणमिह गतिः । प्रणियाति ।यातः, यान्ति ॥ **लङः शाकटायनस्यैव** । ३ । ४ । १११ ॥ आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः अयन् । यायात् । यायाताम् । यायास्ताम् ॥ ( वा७ गतिगन्धनयोः) **गन्धनं** सूचनम् ॥ ( भा ८ दीप्तौ ) ॥ ( ष्णा९ शौचे ) ( श्रा १० पाके ) ( द्रा ११ कुत्सायां गतौ ) (प्सा१२ भक्षणे) ( पा १३ रक्षणे )–पायास्ताम् । अपासीत् ( रा १४ दाने) (ला १५ आदाने ) द्वावपि दाने इति **चन्द्रः** ( दाप् १६ लवने )–प्रणिदाति, प्रनिदाति । दायास्ताम् । अदासीत् ( ख्या १७ प्रकथने )–अयं सार्वधातुकमात्रविषयः । **( सस्थानत्वं नमः ख्याते )**–इति वार्तिकं, तद्भाष्यं चेह लिङ्गम् । **सस्थानो** जिह्वामूलीयः । स नेति ख्यात्रादेशस्य ख्शादित्वे प्रयोजनमित्यर्थः।सम्पूर्वस्य ख्यातेःप्रयोगो नेति **न्यासकारः** ( मा १८ माने)–अकर्मकः।"तनौ ममुस्तत्र न कैटभद्विषः" इति **माघः**।उपसर्गवशेनार्था-

न्तरे सकर्मकः—"उदरं परिमाति मुष्टिना"। नेर्गदेत्यत्र नास्य ग्रहणम्—प्रणिमाति, प्रनिमाति॥(वच १९ परिभाषणे)—वक्ति, वक्तः। **अयमन्तिपरो न प्रयुज्यते**। बहुवचनपर इत्यन्ये। झिपर इत्यपरे। वग्धि। वच्यात्। उच्यात्। अवोचत्॥(विद २० ज्ञाने)॥ **विदो लटो वा। ३।४।८३॥** वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः। वेद, विदतुः, विदुः। वेत्थ, विदथुः, विद। वेद, विद्व, विद्म। पक्षे—वेत्ति, वित्तः इत्यादि। विवेद, विविदतुः। उषविदेत्याम्पक्षे विदेत्यकारान्तनिपातनान्न लघूपधगुणः—विदाञ्चकार, वेदिता॥ **विदाङ्कुर्वन्त्वित्यन्यतरस्याम्। ३। १। ४१॥** वेत्तेर्लोट्याम्, गुणाभावो, लोटो लुक्, लोडन्तकरोत्यनुप्रयोगश्च, वा निपात्यते। पुरुषवचने न विवक्षिते। इतिशब्दात्॥ **तनादिकृञ्भ्य उः। ३। १। ७९॥** तनादेः, कृञश्च, उप्रत्ययः स्यात्। शपोऽपवादः। तनादित्वादेव सिद्धे कृञ्ग्रहणं—**गणकार्यस्यानित्यत्वे** लिङ्गम्। तेन "न विश्वसेदविश्वस्तम्" इत्यादि सिद्धम्। विदाङ्करोतु॥ **अत उत्सार्वधातुके। ६।४। ११०॥** उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति। उदिति तपरकरणसामर्थ्यान्न गुणः। विदाङ्कुरुतात्, विदाङ्कुरुताम्। उतश्चेति हेर्लुक्। आभीयत्वेन लुकोऽसिद्धत्वादुत्वम्—विदाङ्कुरु। विदाङ्करवाणि। अवेत्। अवित्ताम्। सिजभ्यस्तेति झेर्जुस्—अविदुः॥ **दश्च। ८।२।७५॥** धातोर्दस्य पदान्तस्य सिपि परे रुः स्याद्वा। अवेः, अवेत्। (अस २१ भुवि)—अस्ति॥ **श्नसोरल्लोपः। ६।४।१११॥** श्नस्याऽस्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति। स्तः, सन्ति। तासस्त्योरिति सलोपः—असि, स्थः, स्थ। अस्मि, स्वः, स्मः॥ आर्धधातुके इत्यधिकृत्य॥ **अस्तेर्भूः। २। ४।५२॥** बभूव। भविता। अस्तु, स्तात्, स्ताम्, सन्तु॥ **घ्वसोरेद्धावभ्यासलोपश्च। ६। ४। ११९॥** घोरस्तेश्च एत्वं स्याद्धौ परे, अभ्यासलोपश्च। आभीयत्वेन एत्वस्यासिद्धत्वाद्धेर्धिः। श्नसोरित्यल्लोपः—एधि। तातङ्पक्षे—एत्वं न। परेण तातङा बाधात् **सकृद्गताविति न्यायात्**। स्तात्, स्तम्, स्त। असानि, असाव, असाम। अस्तिसिच इतीट्—आसीत्। श्नसोरित्यल्लोपस्याभीयत्वेनासिद्धत्वादाट्— आस्ताम्, आसन्। स्यात्। भूयात्। अभूत्—सिचोस्तेश्च विद्यमानत्वेन विशेषणादिण् न॥ **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः। ८। ३। ८७॥** उपसर्गेभ्यः प्रादुसश्च परस्यास्तेः सस्य षः स्याद् यकारेऽचि च परे। निष्यात्। प्रादुष्यात्। निषन्ति। प्रादुष्षन्ति। यच्परः किम्। अभिस्तः॥ (मृजू २२ शुद्धौ)॥ **मृजेर्वृद्धिः। ७। २। ११४॥** मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे॥ (**क्ङित्यजादौ वेष्यते**)॥ व्रश्चेति षः—मार्ष्टि, मृष्टः, मृजन्ति, मार्जन्ति। ममार्ज, ममार्जतुः, ममृजतुः। ममार्जिथ, ममार्ष्ठ। मार्जिता, मार्ष्टा। मृड्ढि। अमार्ट्। अमार्जम्। अमार्जीत्, अमार्क्षीत्॥ (रुदिर् २३ अश्रुविमोचने)॥ **रुदादिभ्यस्सार्वधातुके। ७। २। ७६॥** रुद्, स्वप्, श्वस्, अन्, जक्ष्, एभ्यो वलादेः सार्वधातुकस्येट् स्यात्। रोदिति, रुदितः। हौ परत्वादिटि धित्वं न—रुदिहि॥ **रुदश्च पञ्चभ्यः।**

। ७ । ३ । ९८ ॥ हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात् ॥ **अड् गार्ग्यगालवयोः** ।७।३।९९॥ अरोदीद, अरोदत्, अरुदिताम्, अरुदन् । अरोदीः, अरोदः ।भक्तिमत्यय**विशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुट्**—रुद्यात् ।अरुदत्,अरोदीत् ॥ ( ञिष्वप् २४शये )—स्वपिति, स्वपितः । सुष्वाप, सुषुपतुः, सुषुपुः । सुष्वपिथ, सुष्वप्थ ॥ **सुविनिर्दुर्भ्यः सुपिसूतिसमाः** । ८ । ३ । ८८ ॥ एभ्यः सुप्यादेः सस्य षः स्यात् ।(**पूर्वं धातुरुपसर्गेण युज्यते**)।किति लिटि परत्वात्संप्रसारणे, षत्वे च, कृते द्वित्वम्॥(पूर्वत्रासिद्धीयमद्विर्वचने)—सुषुषुपतुः, सुषुषुपुः । अकिति तु—द्वित्वेऽभ्यासस्य संप्रसारणम्।षत्वस्यासिद्धत्वात्ततः पूर्वं हलादिःशेषः, नित्यत्वाच्च।ततः सुपिरूपाभावान्न षः। सुसुष्वाप । सुस्वप्ता । अस्वपीत्।अस्वपत् । स्वप्यात् । सुप्यात् । सुषुप्यात् । अस्वाप्सीत् ॥ ( श्वस२५प्राणने )—श्वसिति । श्वसिता।अश्वसीत्, अश्वसत् ।श्वस्याताम्।श्वस्यास्ताम्। ह्म्यन्तेति न वृद्धिः—अश्वसीत् ॥(अन२६च)—अनिति।आन । अनिता।आनीत्, आनत् ॥ **अनितेः** ।८। ४ ।.१९ ॥ उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् । प्राणिति ॥ (जक्ष२७ भक्षहसनयोः )—जक्षिति, जक्षितः ॥ **अदभ्यस्तात्** ।७।१।४॥ अभ्यस्तात्परस्य झस्य अत्स्यात् । अन्तापवादः । जक्षति । सिजभ्यस्तेति जुस्—अजक्षुः।अयमन्तःस्थादिरित्युज्ज्वलदत्तो बभ्राम।५॥**रुदादयः पञ्च गताः**॥(जागृ२८निद्राक्षये)—जागर्ति,जागृतः, जाग्रति । उषविदेत्याम् वा—जागराञ्चकार, जजागार ॥ **जाग्रोऽविचिण्णल्ङित्सु** । । ७ । ३ । ८५॥ जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये, प्रतिषेधविषये च । जजागरतुः । अजागः, अजागृताम् । अभ्यस्तत्वाज्जुस्॥**जुसि च** ।७।३।८३॥ अजादौ जुसि इगन्ताङ्गस्य गुणः स्यात् । अजागरुः । अजादौ किम् । जागृयुः । आशिषि तु—जागर्यात्, जागर्यास्ताम्, जागर्यासुः । लुङि—अजागरीत् । जागृ इस् ईत् इत्यत्र यण् प्राप्तः—तं सार्वधातुकगुणो बाधते । तं सिचि वृद्धिः । तां जागर्तिगुणः । तत्र कृते हलन्तलक्षणा वृद्धिः प्राप्ता—नेटीति निषिद्धा।ततोऽतो हलादेरिति बाधित्वातोल्रान्तस्येति प्राप्ता—ह्म्यन्तेति निषिध्यते ॥ तदाहुः—( गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् । पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव इति ॥ (दरिद्रा २९ दुर्गतौ ) दरिद्राति ॥**इद्दरिद्रस्य**।६ । ४।११४ ॥ दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके ।दरिद्रितः॥ **श्नाभ्यस्तयोरातः** । ६ । ४ । ११२ ॥ अनयोरातो लोपः स्यात्—क्ङिति सार्वधातुके। दरिद्रति । अनेकाच्त्वादाम्—दरिद्राञ्चकार । ( आत औ णलः )—इत्यत्र ओ इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम् । (**अत एव ज्ञापकादाम्नेत्येके** )—ददरिद्रौ, ददरिद्रतुरित्यादि॥यत्तु णलि ददरिद्रेति ॥**तन्निर्मूलमेव** ॥ (**दरिद्रातेरार्धधातुके विवक्षिते आतोलोपो वाच्यः**)॥ (**लुङि वा**) ॥**सनि ण्वुलि. ल्युटि च, न**) ॥ दरिद्रिता । अदरिद्रात्, अदरिद्रिताम्, अदरिद्रुः । दरिद्रियात् । दरिद्र्यात् । अदरिद्रीत् । इट्सकौ—अदरिद्रासीत् ॥ ( चकासृ ३० दीप्तौ ) झस्य

अद्—चकासति । चकासाञ्चकार । ( धि च )—इति सलोपः सिच । एवेत्येके—चकाद्धि—चकाधीत्येव भाष्यम् ॥ **तिप्यनस्तेः**।८।२।७३॥पदान्तस्य सस्य दः स्यात्तिपि, न त्वस्तेः । अचकाद्, अचकाद् । अचकासुः ॥ **सिपि धातो रुर्वा** । ८ । २ । ७५ ॥ पदान्तस्य धातोः सस्य रुः स्याद्वा । पक्षे दः—अचकाः, अचकाद् ॥( शासु२१अनुशिष्टौ) शास्ति॥**शास इदङ्हलोः**।६।४।३४ ॥ शास उपधाया इत्स्यादङि, हलादौ क्ङिति च । शासिवसीति षः—शिष्टः । शासति । शशास । शास्तु, शशासतुः, शिष्टाद्, शिष्टाम्, शासतु॥**शाहौ**।६।४।३५॥शास्तेः शादेशः स्याद्धौ परे । तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः। शाधि । अशाद्, अशिष्टाम्, अशासुः । अशाद्, अशाः । शिष्याद् । सर्तिशास्तीत्यङ्—अशिषद्।अशासिष्यद्॥(दीधीङ् ३२दीप्तिदेवनयोः) **एतदादयःपञ्च धातवश्छान्दसाः**। दीधीते।एरनेकाच इति यण्—दीध्याते॥**यीवर्णयोर्दीधीवेव्योः** । ७ । ४ । ५३ ॥ एतयोरन्त्यस्य लोपः स्याद्यकारे, इवर्णे च परे । इति लोपं बाधित्वा नित्यत्त्वाट्टेरेत्वम्—दीध्ये।(दीधीवेवीटाम्)—इति गुणनिषेधः—दीध्याञ्चक्रे, दीधिता, दीधिष्यते ॥ ( वेवीङ् ३३ वेतिना तुल्ये)—वीगतीत्यनेन तुल्येऽर्थे वर्तते इत्यर्थः।—॥ **अथ त्रयः परस्मैपदिनः**—(षस१सस्ति२स्वप्ने) सस्ति, सस्तः, ससन्ति । ससास, सेसतुः।सस्तु । सधि(पूर्वत्रासिद्धम्)-इति सलोपस्यासिद्धत्वाद्—(अतो हेः) इति लुक् न।असद्, असस्ताम्।असः,असद्।सस्याद्। अससीद्, असासीद्।सन्ति, सन्तः संस्तन्ति॥बहूनां समवाये द्वयोः संयोगसंज्ञा नेत्याश्रित्य स्कोरिति लोपभावात्—संस्ति, संस्त इत्येके ॥ (वश ३ कान्तौ)—**कान्तिरिच्छा** । वष्टि, उष्टः, उशन्ति । वक्षि, उष्ठः । उवाश । ऊशतुः । वशिता । वष्टु । उष्टाद्।उड्ढि।अवट्, औष्टाम्, औशन् । अवशम् । उश्यात्ताम्।उश्यास्ताम् ॥(चर्करीतं च)—यङ्लुगन्तमदादौ बोध्यम्।(ह्नुङ्१अपनयने)—ह्नुते। जुह्नुवे । ह्नुवीत । ह्नोषीष्ट । अह्नोष्ट॥**इत्यदादयः** ॥ ❀॥

## ॥ अथ जुहोत्यादयः ॥

(हु१दानादनयोः)—आदाने **चेत्येके** । **प्रीणनेऽपीति** भाष्यम् । **दानं** चेह प्रक्षेपः । स च वैधे आधारे हविषश्चेति स्वभावाल्लभ्यते । **इतश्चत्वारः परस्मैपदिनः** ॥ **जुहोत्यादिभ्यः श्लुः** । २ । ४ । ७५ ॥ शपः श्लुः स्याद् ॥ **श्लौ** । ६।१।१०॥ धातोर्द्वे स्तः । जुहोति, जुहुतः । ( अदभ्यस्तात् )—इत्यद् । हुश्नुवोरिति यण्—जुह्वति॥ **भीह्रीभृहुवां श्लुवच्च** । ३ । १ । ३९ ॥ एभ्यो लिट्याम्वा स्यादामि श्लाविव कार्यं च । जुहवाञ्चकार, जुहाव । होता । होष्यति । जुहोतु, जुहुताद् । हेर्धिः—जुहुधि। आटि परत्वाद्गुणः—जुहवानि । परत्वाद्—(जुसि च)—इति गुणः—अजुहवुः । जुहुयाद् । हूयाद् । अहौषीद् ॥ ( ञि—भी२भये )—बिभेति ॥ **भियोऽन्यतरस्याम्** । ६ । ४ । ११५ ॥ इकारः स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः, बिभीतः, बिभ्यति, बिभयाञ्चकार, बिभाय । भेता ॥ ( ह्री ३ लज्जायाम् )—जिह्रेति, जिह्रीतः, जिह्रियति ।

जिह्वियाश्चकार, जिह्वाय ॥ ( पॄ ४ पालनपूरणयोः ) ॥ **अर्तिपिपर्त्योश्च ।७।४।७७॥** अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ ॥ **उदोष्ठ्यपूर्वस्य।७।१।१०२ ॥** अङ्गावयवौष्ठ्यपूर्वो य ॠत्तदन्तस्याङ्गस्य उत्स्यात् । गुणवृद्धी परत्वादिमं बाधेते—पिपर्ति । उत्त्वम् । रपरत्वम् । ( हलि ५ च )—इति दीर्घः—पिपूर्तः । पिपुरति । पपार । किति लिटि ( ऋच्छत्यॄताम् )—इति गुणे प्राप्ते ॥ **शॄदृप्रां ह्रस्वो वा ।७ । ४ ।.१२ ॥** एषां किति लिटि ह्रस्वो वा स्यात् । पक्षे गुणः । पप्रतुः, पप्रुः । पपरतुः, पपरुः । परिता, परीता । अपिपः, अपिपूर्ताम्, अपिपरुः । पिपूर्यात् । पूर्यात् । अपारीत् । अपारिष्टाम् (ह्रस्वान्तोयमिति **केचित्**६) ।पिपर्ति, पिपृतः, पिप्रति।पिपृयात् । आशिषि—प्रियात् । अपार्षीत् । **पाणिनीयमते** तु--तं रोदसी पिपृतं सत्यवाचमित्यादौ छान्दसत्वं शरणम्--(डुभृञ् ६ धारणपोषणयोः)॥**भृञामित् ।७।४।७६॥** भृञ्, माङ्, ओहाङ्, एषां त्रयाणामभ्यासस्य इत् स्यात् श्लौ । बिभर्ति, बिभृतः, बिभ्रति । बिभृध्वे।श्लुवद्भावाद्वित्वेत्त्वे--बिभरामास; बभार । बभर्थ । बभृव । बिभृहि । बिभराणि । अबिभः, अबिभृताम्, अबिभरुः।बिभृयात्।भ्रियात्।भृषीष्ट।अभार्षीत्, अभृत ॥ ( माङ् ७ माने, शब्दे च ) ॥ **ई हल्यघोः । ६ । ४ । ११३॥** श्नाभ्यस्तयोरात ईत्स्याद्धलादौ किति ङिति सार्वधातुके, न तु घुसंज्ञकस्य । मिमीते । श्नाभ्यस्तयोरित्यालोपः । मिमाते, मिमते।मण्यमास्त ॥ (ओ--हाङ् ८ गतौ) जिहीते, जिहाते, जिहते । जहे । हाता । हास्यते ॥ (ओहाक् ९ त्यागे)--**परस्मैपदी** । जहाति॥ **जहातेश्च । ६ । ४ ।११६॥** इत्स्याद्धलादौ किति, ङिति सार्वधातुके।पक्षे ईत्त्वम्।जहितः, जहीतः,जहति।जहौ॥**आ च हौ। ।६।४।११७॥** जहातेर्हौ परे आ स्यात्, चादिदीतौ । जहाहि, जहिहि, जहीहि । अजहात् । अजहुः ॥ **लोपो यि । ६ । ४ । ११८ ॥** जहातेरालोपः स्याद्यादौ सार्वधातुके।जह्यात् । (एर्लिङि)--हेयात् । अहासीत् ॥ (डुदाञ् १० दाने )--प्रणिददाति।दत्तः, ददति।दत्ते।ददौ।घ्वसोरिति एत्त्वाभ्यासलोपौ—देहि । अददात्, अदत्ताम्, अददुः । दद्यात् । देयात् । अदात्, अदाताम्, अदुः ॥ अदित॥ (डुधाञ् ११ धारणपोषणयोः) । दानेऽप्येके । प्रणिदधाति॥**दधस्तथोश्च।८।२।३८॥** द्विरुक्तस्य झषन्तस्य धातोर्बशो भष् स्यात्तथोः स्ध्वोश्च, परतः।(**वचनसामर्थ्यादालोपो न स्थानिवद्**)—इति **वामनमाधवौ॥ वस्तुतस्तु--(पूर्वत्रासिद्धीये न स्थानिवत्)**--धत्तः, दधति, ।धत्थः, धत्थ।दध्वः । धत्ते। धत्से । धध्वे । धेहि । अधित॥--॥**अथ त्रयः स्वरिततः**--(णिजिर् १ शौचपोषणयोः) **निजां त्रयाणां गुणःश्लौ । ७ । ।४ । ७५॥** निज्, विज्, विष्, एषां त्रयाणामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति, नेनिक्तः,नेनिजति । निनेज । नेक्ता। नेक्ष्यति । नेनेक्तु। नेनिग्धि॥**नाभ्यस्तस्याचि पिति सार्वधातुके।७।३।८७॥** लघूपधगुणो न स्यात् । नेनिजानि । अनेनेक्, अनेनिक्ताम्, अनेनिजुः । नेनिज्यात् । निज्यात् । अनिजत् । अनैक्षीत्, अनिक्त ॥ ( विजिर् २ पृथग्भावे )--वेवेक्ति, ।.वेविक्ते । विवेजिथ--अत्र(विज-

इट्)–इति ङित्त्वं न । ओ–विजी इत्यस्यैव तत्र ग्रहणात् । णिजिविजी रुधादावपि॥ ( विष्लृ ३ व्याप्तौ )–वेवेष्टि, वेविष्टे । ऌदित्वादङ्–अविषत् । तङि क्सः । अजादौ(क्स स्याचि ) इति अल्लोपः । अविक्षत, अविक्षाताम्, अविक्षन्त ॥ **अथ आगणान्तात्परस्मैपदिनश्छान्दसाश्च**–( घृ १क्षरणदीप्त्योः)–जिघर्म्यग्निं हविषा घृतेन।-(भृञामित्)-(बहुलं छन्दसि)इति इत्वम् ॥ (हृ२प्रसह्यकरणे )-अयं स्रुवो अभिजिहर्ति होमान् ॥(ऋ ३ सृ ४ गतौ ) ( बहुलं छन्दसि )इत्येव सिद्धे–( अर्तिपिपर्त्योश्च )–इतीत्त्वविधानादयं भाषायामपि। (अभ्यासस्यासवर्णे )इतीयङ्–इयर्ति, इयृतः, इय्रति । आर, आरतुः । इडत्यर्तीति नित्यमिट्–आरिथ । अर्ता। अरिष्यति । इयराणि, ऐयः, ऐयृताम्, ऐयरुः।इयृयात्। अर्यात् । आरत् । ससर्ति ॥ ( भस ५ भर्त्सनदीप्त्योः )–बभस्ति । घसिभसोर्हलीत्युपधालोपः । ( झलो झलि ) इति सलोपः–बब्धः, बप्सति ॥ ( कि ६ ज्ञाने ) चिकेति ॥ ( तुर ७ त्वरणे )–तुतोर्ति, तुतूर्तः, तुतुरति ॥ ( धिष ८ शब्दे )–दिधेष्टि, दिधिष्टः ॥ ( धन९धान्ये )--दधन्ति, दधन्तः, दधनति॥ ( जन १० जनने ) जजन्ति ॥ **जनसनखनां सञ्झलोः । ६ । ४ । ४२॥** एषामाकारोऽन्तादेशः स्याज्झलादौ सनि, झलादौ किति ङिति च । जजातः, जज्ञति । जजंसि । जजान । जजन्यात्, जजायात् । जन्यात्, जायात् ॥ ( गा ११ स्तुतौ )--देवाञ्जिगाति सुम्नयुः । जिगीतः, जिगति ॥ **इति जुहोत्यादयः** ॥

## ॥ अथ दिवादयः ॥

( दिवु १ क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तगतिषु ) **ऋषन्ताः परस्मैपदिनः।दिवादिभ्यश्श्यन्।३।१।६९॥**शपोऽपवादः । हलि च इति दीर्घः।दीव्यति। दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् ॥ ( षिवु २ तन्तुसन्ताने )--परिषीव्यति । परिषिषेव । न्यषेवीत्, न्यसेवीत् ( स्रिवु ३ गतिशोषणयोः ) ॥ ( ष्ठिवु ४ निरसने ) **केचिदिहेमं न पठन्ति** ( ष्णुसु ५ अदने ) आदान **इत्येके** । अदर्शन **इत्यपरे** । स्नुस्यति सुष्णोस ॥ ( ष्णसु६निरसने )--स्नस्यति । सस्नास ॥ ( क्नसु ७ ह्वरणदीप्त्योः )-**ह्वरणं** कौटिल्यम् । चक्नास ॥ ( व्युष८दाहे )--वुव्योष ॥ (प्लुष९च)–॥(नृती१०गात्रविक्षेपे)–नृत्यति।ननर्त ॥ **सेऽसिचि कृतचृतछृदतृदनृतः । ७ । २ ५७ ॥** एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्य इड्वा स्यात् । नर्तिष्यति, नर्त्स्यति । नृत्येत् । नृत्यात् । अनर्तीत् ॥ ( त्रसी११ उद्वेगे ) वा भ्राशेति श्यन्वा–त्रस्यति त्रसति । त्रेसतुः, तत्रसतुः ॥( कुथ १२ पूतीभावे)-**पूतीभावो** दौर्गन्ध्यम् ॥ ( पुथ १३ हिंसायाम् ) ॥ ( गुध १४ परिवेष्टने ) ॥ (क्षिप १५ प्रेरणे )--क्षिप्यति । क्षेप्ता ॥ ( पुष्प १६ विकसने )--पुष्प्यति । पुपुष्प ॥ ( तिम १७ ष्टिम १८ ष्टीम१९आर्द्रीभावे)–तिम्यति । स्तिम्यति।स्तीम्यति॥( व्रीड २०

चोदने लज्जायां च)—व्रीडयति॥(इष२१गतौ)-इष्यति॥(षह २२ षुह२३चक्यर्थे)—चक्यर्थ स्तृप्तिः।सह्यति।सुह्यति॥(जॄष् २४झॄष् २५वयोहानौ)—जीर्यति । जजरतुः,जेरतुः । जरिता, जरीता । जीर्येत् । जीर्यात् । जॄस्तम्भ्वित्यङ्वा । (ऋदृशोऽङि गुणः)—अजरत्, अजारीत्, अजारिष्टाम् । झीर्यति । जझरतुः । अझारीत् ॥ ( षूङ् २६ प्राणिप्रसवे )—सूयते । सुषुवे । स्वरतीति विकल्पं बाधित्वा युकः कितीति निषेधे प्राप्ते—क्रादिनियमान्नित्य-मिट्—सुषुविषे । सुषुविवहे । सोता सविता ॥ ( दूङ् २७ परितापे )—दूयते ॥ ( दीङ् २८ क्षये )—दीयते ॥ **दीङो युडचि क्ङिति । ६ । ४ । ६३ ॥** दीङःपर स्याजादेः क्ङितः आर्धधातुकस्य युट् स्यात् ॥ ( **वुग्युटावुवङ्यणोः सिद्धौ वक्त व्यौ**)॥दिदीये॥**मीनातिमिनोतिदीङां ल्यपि च**।६।१।५०॥एषामात्त्वं स्याल्ल्यपि चकारादशित्येज्निमित्ते । दाता । दास्यते । अदास्त । अदास्थाः ॥ ( डीङ् २९ विहायसा गतौ )—डीयते, डिड्ये ॥ ( धीङ् ३० आधारे )—धीयते । दिध्ये । ध्येता॥ ( मीङ् ३१ हिंसायाम् )—**हिंसात्र** प्राणवियोगः । मीयते॥ ( रीङ् ३२ श्रवणे)रीयते॥ ( लीङ् ३३ श्लेषणे ) ॥ **विभाषा लीयतेः**।६।१।५१॥लीयतेरिति यका निर्देशो,न तु-श्यना । लीलीङोरात्वं वा स्यादेज्विषये, ल्यपि च । लेता, लाता । लेष्यते, लास्यते। एज्विषये किम् । लीयते । लिल्ये ॥ ( व्रीङ् ३४ वृणोत्यर्थे )—व्रीयते । विव्रिये । ( **स्वा दय ओदितः** ) । तत्फलं तु निष्ठानत्वम् ॥ ( पीङ् ३५ पाने ) पीयते ॥ ( माङ्३६ माने)—मायते,ममे॥(ईङ् ३७ गतौ)ईयते,अयाञ्चक्रे॥(प्रीङ्३८प्रीतौ)—सकर्मकः।प्रीयते।पि प्रिये ॥ **अथ परस्मैपदिनश्चत्वारः** । ( शो १ तनूकरणे ) **ओतः श्यनि** ।७।३। ७१॥ लोपः स्यात् श्यनि । श्यति, श्यतः, श्यन्ति । शशौ, शशतुः । शाता । शास्यति। विभाषा घ्राधेडिति सिचो वा लुक् । लुगभावे यमरमेतीट्सकौ । अशात्, अशाताम्, अशुः। अशासीत्, अशासिष्टाम् ॥ ( छो २ छेदने )--छ्यति ॥ ( षो ३ अन्तकर्मणि )--स्यति। ससौ।अभिष्यति । अभ्यष्यत् । अभिससौ॥( दो ४ अवखण्डने)--द्यति । ददौ । प्रणिदाता। देयात्, अदात् ॥ **अथात्मनेपदिनः पञ्चदश**॥(जनी १ प्रादुर्भावे ) ॥ **ज्ञाजनोर्जा** ।७।३।७९॥अनयोर्जादेशः स्याच्छिति । जायते,जज्ञे, जज्ञाते, जज्ञिरे । जनिता । जनिष्य ते।दीपजनेति वा चिण्॥**जनिवध्योश्च**।७।३।३५॥अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञिति, णिति,कृति च । अजनि, अजनिष्ट ( दीपी २ दीप्तौ )-दीप्यते । दिदीपे, अदीपि, अदीपिष्ट ॥ ( पूरी ३ आप्यायने )—पूर्यते। अपूरि, अपूरिष्ट ॥ ( तूरी ४ गतित्वर-णहिंसनयोः )--तूर्यते । तुतूरे ॥ ( धूरी ५ गूरी ६ हिंसागत्योः )—धूर्यते । दुधूरे । गूर्यते । जुगूरे ॥ ( घूरी ७ जूरी ८ हिंसावयोहान्योः)॥( शूरी ९ हिंसास्तम्भनयोः )-( चूरी १० दाहे ) ॥ ( तप ११ ऐश्वर्ये वा ) अयं धातुरैश्वर्ये वा तङ्श्यनौ लभते।अन्य दा तु शब्विकरणः परस्मैपदीत्यर्थः ॥ **केचित्तु** वाग्रहणं वृतुधातोराद्यवयव**मिच्छन्ति** तप्यते । तप्ता । तप्स्यते । ( पतेति व्यत्यासेन पाठान्तरम्)द्युतद्यामानियुतःपत्यमानः॥

(वृतु १२वरणे)—वृत्यते।पक्षान्तरे—वावृत्यते।"ततो वावृत्यमाना सा रामशालां न्यविक्षत" इति भट्टिः ॥ ( क्लिश १३ उपतापे )—क्लिश्यते।क्लेशिता ( काशृ १४ दीप्तौ )—काश्यते (वाशृ १५ शब्दे )--वाश्यते । ववाशे ॥--॥ **अथ पञ्च स्वरितेतः**--(मृष१तितिक्षायाम्)-मृष्यति, मृष्यते । ममर्ष, ममृषे ॥ ( ई—शुचिर् २ पूतीभावे ) **पूतीभावः** क्लेदः।शुच्यति। शुच्यते । शुशोच । शुशुचे । अशुचत्,अशोचीत्, अशोचिष्ट ॥ ( णह३ बन्धने )—नह्यति, नह्यते । ननाह । ननद्ध, नेहिथ । नेहे । नद्धा । नत्स्यति । अनात्सीत् ॥ ( रञ्ज ४ रागे )—रज्यति, रज्यते ॥ ( शप ५ आक्रोशे )--शप्यति, शप्यते ॥ **अथैकादशाऽनुदात्तेतः** ( पद १ गतौ )—पद्यते । पेदे । पत्ता । पद्येत । पत्सीष्ट ॥ **चिण् ते पदः । ३ । १ । ६० ॥** पदेश्च्लेश्चिणू स्यात्तशब्दे परे । मण्यपादि° । अपत्साताम्, अपत्सत ॥ ( खिद् २ दैन्ये )—खिद्यते । चिखिदे । खेत्ता । अखित्त ॥ ( विद ३ सत्तायाम् )—विद्यते । वेत्ता ॥ ( बुध ४ अवगमने )—बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि, अबुद्ध, अभुत्साताम् ॥ ( युध ५ सम्प्रहारे )--युध्यते । युयुधे । योद्धा।अयुद्ध॥**कथं** युध्यतीति॥युधमिच्छतीति क्यच् । **(अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्)—इति** वा ॥ (अनो रुध६कामे)—अनुरुध्यते ॥ (अण७प्राणने)--अण्यते। आणे । अणिता ॥ (अनेति ८ दन्त्यान्तो**ऽयमित्येके**)॥( मन ९ ज्ञाने )--मन्यते।मेने । मन्ता ॥( युज १० समाधौ )—**समाधिश्चि**त्तवृत्तिनिरोधः । अकर्मकः । युज्यते । योक्ता। ( सृज ११ विसर्गे )—अकर्मकः । "संसृज्यते सरसिजैररुणांशुभिन्नैः" ।ससृजिषे । स्रष्टा । स्रक्ष्यते । लिङ्सिचाविति कित्त्वान्न गुणो, नाप्यम् । सृक्षीष्ट । असृष्ट, असृक्षाताम् ॥ ( लिश१२अल्पीभावे )—लिश्यते । लेष्टा । लेक्ष्यसे । लिक्षीष्ट । अलिक्षत, अलिक्षाताम्॥ **अथागणान्ताः परस्मैपदिनः**—( राधः १ अकर्मकाद्वृद्धावेव )--एवकारो भिन्नक्रमः। राधोऽकर्मकादेव श्यन्।उदाहरणमाह--(वृद्धाविति ) "यन्मह्यमपराध्यति" । द्रुह्यतीत्यर्थः। "विराध्यन्तं क्षमेत कः" । द्रुह्यन्तमित्यर्थः।राध्यत्योदनः।सिध्यतीत्यर्थः।कृष्णाय राध्यति। दैवं पर्यालोचयतीत्यर्थः । दैवस्य धात्वर्थे अन्तर्भावाज्जीवत्यादिवदकर्मकत्वम् । रराध, रराधतुः।रराधिथ । (राधो हिंसायाम् )—इत्येत्वाभ्यासलोपाविह न । हिंसार्थस्य सकर्मकतया दैवादिकत्वायोगात् । राद्धा।रात्स्यति।अयं **स्वादिश्चुरादिश्च**॥(व्यध२ताडने)—ग्रहिज्येति संप्रसारणम्—विध्यति । विव्याध, विविधतुः । विव्यद्ध, विव्यधिथ । व्यद्धा। व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् ॥ ( पुष ३ पुष्टौ )--पुष्यति । पुपोष । पुपोषिथ।पोष्टा । पोक्ष्यति । पुषादीत्यङ्--अपुषत् ॥ (शुष ४ शोषणे )--अशुषत्॥(तुष ५ प्रीतौ ) ॥ ( दुष ६ वैकृत्ये ) ॥ (श्लिष ७ आलिङ्गने)—श्लिष्यति।शिश्लेष।श्लेष्टा।श्लेक्ष्यति॥ **श्लिषः । ३ । १ ।४६॥** अस्मात्परस्यानिटश्च्लेः क्सः स्यात् । पुषाद्यङोऽपवादो न तु चिणः।**पुरस्तादपवादन्यायात्**॥**आलिङ्गने**।३।१।४६॥श्लिषश्च्लेरालिङ्गिने एव क्सो नान्यत्र।**(योगविभागसामर्थ्याच्छल इगुपधादित्यस्याप्ययं नियमः)**-अश्लि-

क्षत्कन्यां देवदत्तः । आलिङ्गन एवेति किम् । समश्लिषज्जतु काष्ठम्—अङ्गमत्यासत्तावेिह श्लिषिःकर्मणि अनालिङ्गने सिजेव, न तु क्सः । एकवचने चिण्—अश्लेषि । अश्लिक्षाताम् । अश्लिक्षंत । अश्लिष्ठाः।अश्लिड्ढ्वम् । (शक ८ विभाषितो मर्षणे) । विभाषित इति उभयपदीत्यर्थः । शक्यति । शक्यते । हरिं द्रष्टुं भक्तः । शशाक । शेकिथ, शशक्थ । शेके । शक्ता । शक्ष्यति, शक्ष्यते । अशकत्, अशक्त । **सेट्कोऽयमित्येके।तन्मतेनानिट्कारिकासु** लृदित्पठितः । शकिता । शकिष्यति ॥ (ञि–ष्विदा ९ गात्रप्रक्षरणे ) घर्मस्रुतावित्यर्थः । अयं ञीदिति **न्यासकारादयः** । नेति **हरदत्तादयः**।स्विद्यति । सिष्वेद।सिष्वेदिथ। स्वेत्ता । अस्विदत् ॥ ( क्रुध१०क्रोधे )—क्रोद्धा । क्रोत्स्यति ॥ (क्षुध ११बुभुक्षायाम्)—क्षोद्धा ॥ कथं क्षुधित इति ॥ सम्पदादिक्विबन्तात्तारकादित्वादितजिति **माधवः॥वस्तुतस्तु** वसतिक्षुधोरितीट् ॥ ( शुध १२ शौचे )—शुध्यति । शुशोध । शोद्धा ॥ ( षिधु १३ संराद्धौ )—ऊदित्पाठः **प्रामादिकः** । सिध्यति । सेद्धा । सेत्स्यति । असिधत् ॥ ( रध १४ हिंसासंराद्ध्योः )—संराद्धिर्निष्पत्तिः । रध्यति।रधिजभोरिति नुम्—ररन्धतुः॥ **रधादिभ्यश्च । ७ । २ । ४९ ॥** रध, नश, तृप, दृप, द्रुह, मुह, ष्णुह, ष्णिह, एभ्यो वलादेरार्द्धधातुकस्येड्वा स्यात् । ररन्धिथ, ररद्ध । ररन्धिव, रेध्व ॥ **नेट्यलिटि रधेः । ७ । १ । ६२ ॥** लिड्वर्जे इटि रधेर्नुम्न स्यात् । रधिता, रद्धा । रधिष्यति, रत्स्यति । अङि नुम् । अनिदितामिति नलोपः—अरधत्॥ (णश१५अदर्शने )—नश्यति। ननाश, नेशतुः । नेशिथ ॥ **मस्जिनशोर्झलि । ७ । १ । ६० ॥** नुम् स्यात् । ननंष्ठ। नेशिव, नेश्व । नेशिम, नेश्म । नशिता, नंष्टा । नशिष्यति, नङ्क्ष्यति । नश्येत् । नश्यात् । अनशत् । प्रणश्यति ॥ **नशेःषान्तस्य । ८ । ४ । ३६ ॥** णत्वं न स्यात्। प्रनंष्टा । ( **अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम्** )—प्रनङ्क्ष्यति । नशिष्यति ॥ ( तृप १६ प्रीणने )—**प्रीणनं** तृप्तिस्तर्पणं च । “ नाग्निस्तृप्यति काष्ठानाम् ” । “ पितॄनताप्सींद् ” इत्युभयत्र दर्शनात् । ततर्पिथ, तत्रप्थ–ततर्प्थ । तर्पिता, तर्प्ता, त्रप्ता । कृशमृशस्पृशेति सिज्वा—अताप्सींत्, अतर्पीत्, अत्राप्सीत्, अतृपत् ॥ ( दृप १७ हर्षमोहनयोः ) **मोहनं** गर्वः । दृप्यतीत्यादि ॥ **रधादित्वादिमौ वेट्रावमर्थमनुदात्तता ॥** ( द्रुह १८ जिघांसायाम् ) वा द्रुहमुहेति वा घः । पक्षे ढः।दुद्रोग्ध, दुद्रोढ, दुद्रोहिथ । द्रोहिता, द्रोग्धा, द्रोढा । द्रोहिष्यति, ध्रोक्ष्यति–ढत्वघत्वयोस्तुल्यं रूपम् । अद्रुहत् ॥ ( मुह १९ वैचित्त्ये )—**वैचित्त्यमविवेकः** । मुह्यति । मुमोहिथ, मुमोग्ध, मुमोढ । मोढा, मोहिता । मोहिष्यति, मोक्ष्यति । अमुहत्॥(ष्णुह२० उद्गिरणे)—स्नुह्यति। सुष्णोह । सुष्णोहिथ, सुष्णोग्ध, सुष्णोढ । सुष्णुहिव, सुष्णुह्व । स्नोहिता, स्नोग्धा, स्नोढा । स्नोहिष्यति, स्नोक्ष्यति । अस्नुहत् ॥ (ष्णिह२१प्रीतौ)–स्निह्यति।सिष्णेह॥**(वृत)॥**रधादयो वृत्ताः । पुषादयस्तु आगणान्तादिति सिद्धान्तः॥(शमु१उपशमे) ॥ **शमामष्टानां दीर्घश्श्यनि । ७ ।३।७४ ॥** शमादीनामित्यर्थः । प्रणिशाम्यति । शेमतुः । शेमिथ ।

शमिता। अशमत्॥ (तमु२काङ्क्षायाम्)–ताम्यति।तमिता।अतमत्॥ (दमु ३ उपशमे) उपशमे इति ण्यन्तस्य। तेन सकर्मकोऽयम्। न तु शमिवदकर्मकः। अदमत्। (श्रमु ४ तपसि, खेदे च)–श्राम्यति। अश्रमत्॥ (भ्रमु५अनवस्थाने)–वा भ्राशेति श्यन्वा। तत्र कृते शमामष्टानामिति दीर्घः–भ्राम्यति लुङ्यङ्–अभ्रमत्। शेषं भ्वादिवत्॥ (क्षमू ६ सहने)–क्षाम्यति। चक्षमिथ, चक्षन्थ। चक्षमिव, चक्षण्व। चक्षमिम, चक्षण्म। क्षमिता, क्षन्ता। अयमषित्।भ्वादिस्तु–षित्।**अषितः क्षाम्यतेः क्षान्तिः क्षमषः क्षमतेः क्षमा**॥ (क्लमु ७ग्लानौ)–क्लाम्यति, क्लामति।शपीव श्यन्यपि ष्ठिवु-क्लम्वित्येव दीर्घे सिद्धे शमादिपाठो घिनुणर्थः।अङ्–अक्लमत्॥ (मदी ८ हर्षे)–माद्यति। अमदत्॥ **शमादयोऽष्टौ गताः**॥(असु १क्षेपणे)–अस्यति। आस।असिता॥**अस्यतेस्थुक्।७।४।१७॥** अङि परे। आस्थत्। अस्य पुषादित्वादङि सिद्धे अस्यतिवक्तीति वचनं तङर्थम्। तङ् तु–(उपसर्गादस्यत्यूह्योः)–इति वक्ष्यते।पर्यास्थत॥ (यसु २ प्रयत्ने)॥**यसोऽनुपसर्गात्।३।१।७१॥ संयसश्च।३।१।७२॥** श्यन्वा स्यात्। यस्यति, यसति। संयस्यति, संयसति। अनुपसर्गात्किम्। मयस्यति॥ (जसु३ मोक्षणे)–जस्यति॥ (तसु ४ उपक्षये)॥ (दसु ५ च) तस्यति। अतसत्। दस्यति। अदसत्॥ (वसु ६ स्तम्भे) वस्यति। ववास, ववसतुः–न शसददेति निषेधः। बशादिरयमिति **मते** तु–बेसतुः, बेसुः। (व्युष ७ विभागे)–अयं दाहे **पठितः**। अर्थभेदेन त्वङर्थं पुनः पठ्यते–अव्युषत्। (ओष्ठ्यादिर्दन्त्यान्तो ऽयम् ८–व्युसतीत्यन्ये)॥ (अयकारं बुस ९ **इत्यपरे**)॥ (प्लुष१०दाहे)अप्लुषत्। पूर्वत्र पाठः सिजर्थ **इत्याहुः**। तद् भ्वादिपाठेन गतार्थमिति **सुवचम्**॥ (विस ११ प्रेरणे)-विस्यति। अविसत्॥ (कुस १२ संश्लेषणे)–अकुसत्॥ (बुस १३उत्सर्गे)॥ (मुस १४ खण्डने)॥ (मसी १५ परिणामे)–**परिणामो** विकारः। (समी १६ **इत्येके**)–॥ (लुठ१७विलोडने)–॥ (उच१८समवाये)–उच्यति। उवोच, ऊचतुः॥ मा भवानुचत्॥ (भृशु १९ भ्रंशु २० अधः पतने)–बभर्श। अभृशत्। अनिदितामिति नलोपः–भ्रश्यति। अभ्रशत्॥ (वृश २१ वरणे)–वृश्यति।अवृशत्॥(कृश २२ तनूकरणे)–कृश्यति॥ (ञि–तृष २३ पिपासायाम्)॥ (हृष२४ तुष्टौ)–श्यन्नङौ भौवादिकाद्विशेषः॥ (रुष २५ रिष २६हिंसायाम्)–तीषसहेति वेट्। रोषिता, रोष्टा। रेषिता, रेष्टा॥ (डिप २७ क्षेपे)॥ (कुप २८ क्रोधे)॥ (गुप २९ व्याकुलत्वे) (युप ३० रुप ३१ लुप ३२ विमोहने)–युप्यति। रुप्यति। लुप्यति। लोपिता। लुप्यतिः सेट्कः। अनिट्कारिकायां **लिपिसाहचर्यात्तौदादिकस्यैव** ग्रहणात्॥ (लुभ ३३गार्ध्ये)**गार्ध्यमाकाङ्क्षा**। तीषसहेति वेट्–लोभिता, लोब्धा। लोभिष्यति। लुभ्येत्। लुभ्यात्। अलुभत्। भ्वादेरवृत्कृतत्वाल्लोभतीत्यपीत्याहुः॥ (क्षुभ ३४ सञ्चलने)–क्षुभ्यति॥ (णभ ३५ तुभ ३६ हिंसायाम्) क्षुभिनभितुभयो द्युतादौ क्र्यादौ

पठ्यन्ते। तेषां द्युतादित्वादङ् सिद्धः।क्र्यादित्वात्पक्षे सिज् भवत्येव।इह पाठस्तुश्यनर्थः॥ ( क्लिदू २७ आर्द्रीभावे ) क्लिद्यति। चिक्लेदिथ, चिक्लेत्थ।चिक्लिदिव, चिक्लिद्व।चिक्लिदिम, चिक्लिद्म।क्लेदिता, क्लेत्ता। ( ञि–मिदा ३८स्नेहने)॥(मिदेर्गुणः)–मेद्यति। अमिदत्.द्युतादि-पाठादेवामिदत्, अमेदिष्टेति सिद्धे–इहपाठोऽमेदीदिति मा भूदिति। द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः॥(ञि–क्ष्विदा २९स्नेहनमोचनयोः )॥ (ऋधु ४० वृद्धौ) आनर्ध। आर्धत्॥ (गृधु ४१ अभिकाङ्क्षायाम् )–अगृधत्॥ ( वृत )॥ पुषादयो दिवादयश्च वृत्ताः॥ **केचित्तु** पुषादिसमाप्त्यर्थमेव वृत्करणम्। दिवादिस्तु–भ्वादिवदाकृतिगणः। तेन क्षीयते, मृग्यतीत्यादिसिद्धिरित्याहुः॥ **॥ इति दिवादयः॥**

## अथ स्वादयः॥

(षुञ् १अभिषवे)–**अभिषवः**–स्नपनं, पीडनं, सुरासंधानं, स्नानं च।तत्र स्नानेऽकर्मकः॥ **स्वादिभ्यःश्नुः। ३। १। ७३॥** सुनोति, सुनुतः। हुश्नुवोरिति यण्–सुन्वन्ति। सुन्वः, सुनुवः। सुन्वहे, सुनुवहे। सुषाव। सुषुवे। सोता। सुनवानि। सुनवै।सुनुयात्। सूयात्। स्तुसुधूञ्भ्य इतीट् असावीत्, असोष्ट। अभिषुणोति। अभ्यषुणोत्। अभिसुषाव॥ **सुनोतेःस्यसनोः। ८। ३। ११७॥** स्ये, सनि च, परे सुञः षो न स्यात्। विसोष्यति॥ ( षिञ् २ बन्धने )–सिनोति। विसिनोति। सिषाय, सिष्ये। सेता॥ ( शिञ् ३निशाने )–तालव्यादिः। शेता॥ ( डुमिञ् ४प्रक्षेपणे )–मीनातिमिनोतीत्यात्वम्–ममौ। ममिथ, ममाथ। मिम्ये। माता। मीयात्, मासीष्ट। अमासीत्, अमासिष्टाम्। अमास्त॥ ( चिञ् ५ चयने )–प्रणिचिनोति॥ **विभाषा चेः। ८। ३। ५८॥** अभ्यासात्परस्य चिञः कुत्वं वा स्यात्–सनि, लिटि च। प्रणिचिकाय, चिचाय, चिक्ये, चिच्ये। अचैषीत्, अचेष्ट॥ ( स्तृञ् ६ आच्छादने )–स्तृणोति, स्तृणुते। गुणोर्तीति गुणः–स्तर्यात्॥ **ऋतश्च संयोगादेः। ७। २। ४३॥** ऋदन्तात् संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि। स्तरिषीष्ट, स्तृषीष्ट। अस्तरिष्ट, अस्तृत॥ ( कृञ् ७ हिंसायाम् )-कृणोति, कृणुते। चकार, चकर्थ, चक्रे। क्रियात्, कृषीष्ट। अकार्षीत्, अकृत॥ (वृञ् ८ वरणे)॥ **बभूथाततन्थजगृभ्मववर्थेति निगमे। ७। २। ६४॥** एषां वेदे इडभावो निपात्यते। तेन भाषायां थलीट्–ववरिथ। ववृव। ववृवहे। वरिता, वरीता॥ **लिङ्सिचोरात्मनेपदेषु। ७। २। ४२॥** वृङ्वृञ्भ्यामॄदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि॥ **न लिङि। ७। २। ३९॥** वॄतो लिङ इटो दीर्घो न स्यात्। वरिषीष्ट, वृषीष्ट। अवारीत्, अवारिष्ट, अवरीष्ट, अवृत॥ ( धुञ् ९ कम्पने )–धुनोति, धुनुते। अधौषीत्।अधोष्यत्॥ ( दीर्घान्तोऽप्ययम् १० )–धूनोति-धूनुते। स्वरतिसूतीति वेट्–दुधविथ, दुधोथ। किति लिटि तु–श्र्युक इति निषेधं बाधित्वा क्रादिनियमान्नित्यमिट्–

दुधुविव । स्तुसुधूञ्भ्य इति नित्यमिट्–अधावीत् । अधविष्ट, अधोष्ट ॥ **अथ-परस्मैपदिनः**–( टुदु १ उपतापे)–दुनोति ॥ (हि२ गतौ वृद्धौ,च)॥**हिनुमीना**।८। ४ । १५ ॥ उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात् । प्रहिणोति ॥**हेरचङि** ७ । ३ । ५६ ॥ अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि । जिघाय ॥ ( पृ ३प्रीतौ)–पृणोति।पर्ता ॥ (स्पृ४प्रीतिपालनयोः)–(प्रीतिचलनयोरित्यन्ये)। **चलनं** जीवनमिति **स्वामी** । स्पृणोति। पस्पार।(स्मृ ५इत्येके)स्मृणोति । **पृणोत्यादय-स्त्रयोऽपि च्छान्दसा इत्याहुः** ॥ ( आप्ऌ ६ व्याप्तौ )–आप्नोति, आप्नुतः, आप्नुवन्ति । आप्नुवः । आप । आप्ता । आप्नुहि । ऌदित्वादङ्–आपत् ॥ ( शक्ऌ ७ शक्तौ )–अशकत् ॥ ( राध ८ साध ९ संसिद्धौ )–राध्नोति ॥ **राधो हिंसायाम्** । ६ । ४ । १२३ ॥ एत्वाभ्यासलोपौ स्तः–किति, लिटि सेटि थलि च । अपरेधतुः, रेधुः । रेधिथ । राद्धा ॥ साध्नोति । साद्धा । असात्सीत्, असाद्धाम् ॥ **अथ द्वावनुदात्तेतौ**–(अशू१व्याप्तौ, सङ्घाते च)–अश्नुते ॥ **अश्नोतेश्च** । ७ । ४ । ७२ ॥ दीर्घादभ्यासादवर्णात्परस्य नुट् स्यात् । आनशे । अशिता, अष्टा । अशिष्यते, अक्ष्यते । अश्नुवीत । अक्षीष्ट, अशिषीष्ट । आशिष्ट, आष्ट, आक्षाताम् । ( ष्टिघ २ आस्कन्दने )–स्तिघ्नुते । तिष्टिघे । स्तेघिता ॥ **अथ आगणान्तात्प-रस्मैपदिनः**–( तिक १ तिग२गतौ च । चादास्कन्दने । तिक्नोति । तिग्नोति॥(षघ २ हिंसायाम् )–सघ्नोति ॥ ( ञि–धृषा ४ प्रागल्भ्ये )–धृष्णोति । दधर्ष । धर्षिता ॥ ( दम्भु ५ दम्भने )–**दम्भनं**–दम्भः । दभ्नोति।ददम्भ। (**श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वा**)–इति **व्याकरणान्तरमि**हाप्याश्रीयत इत्युक्तम्।अनिदितामिति नलोपः । तस्याभीयत्वादसिद्धत्वेन एत्वाभ्यासलोपयोरप्राप्तौ-(दम्भेश्चैत्वाभ्यासलोपौ वक्तव्यौ)॥ देभतुः, ददम्भतुः।इदं कित्वं पिदपिद्विषयकमिति **सुधाकरादयः।तन्मते** तिप्सिप्मिप्सु देभ, देभिथ, देभेति रूपान्तरं बोध्यम् । अपिद्विषयकमिति **न्यासकारादिमते तु-** ददम्भ, ददम्भिथ, ददम्भेत्येव । दभ्यात् ॥( ऋधु ६ वृद्धौ )॥(तृप७प्रीणन इत्येके ) ॥ क्षुभ्नादित्वाण्णत्वं न–तृप्नोति ॥ (**छन्दसि** )–आगणान्तादधिकारोऽयम् । ( अह १ व्याप्तौ )–अह्नोति ॥ ( दघ २ घातने, पालने च )–दघ्नोति ॥ ( चमु ३ भक्षणे )– चम्नोति ॥ ( रि ४ क्षि ५ चिरि ६ जिरि ७ दाश ८ दृ ९ हिंसायाम् )–रिणोति । क्षिणोति । अयं भाषायामपीत्येके। "न तद्यशः शस्त्रभृतां क्षिणोति"।(ऋक्षीत्येक एवाजादिरित्यन्ये ) ऋक्षिणोति चिरिणोति । जिरिणोति । दाश्नोति । दृणोति । ( वृत् ) ॥

**॥ इति स्वादयः ॥–॥**

**॥ अथ तुदादयः ॥**

(तुद १ व्यथने ) ॥ **इतः षट् स्वरितेतः**॥**तुदादिभ्यः शः**॥३।१।७७॥ तुदति, तुदते तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत्, अतुत्त ॥ ( णुद २ प्रेरणे )–

नुदति, नुदते । नुनोद, नुनुदे । नोत्ता ॥ ( दिश ३ अतिसर्जने )-**अतिसर्जनं** दानम् । देष्टा । दिक्षीष्ट । अदिक्षत्, अदिक्षत ॥( भ्रस्ज ४ पाके ) । ग्रहिज्येति सम्प्रसारणम् । सस्य श्चुत्वेन शः । तस्य जश्त्वेन जः-भृज्जति, भृज्जते ॥ **भ्रस्जो रोपधयो रमन्यतरस्याम् । ६ । ४ । ४७** ॥ भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्त्वादन्त्यांदचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः-बभर्ज, बभर्जतुः । बभर्जिथ, बभर्ष्ठ । बभर्जे । रमभावे-बभ्रज्ज बभ्रज्जतुः । बभ्रज्जिथ । स्कोरिति सलोपः । व्रश्चेति षः-बभ्रष्ठ । भभ्रज्जे । भर्ष्टा, भ्रष्टा । भ्रक्ष्यति, भर्क्ष्यति ॥ ( **क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन**॥ भृज्यात्, भृज्यास्ताम्।भर्क्षीष्ट, भ्रक्षीष्ट । अभार्क्षीत्, अभ्राक्षीत्, अभर्ष्ट, अभ्रष्ट ॥ ( क्षिप ५ प्रेरणे )-क्षिपति, क्षिपते । क्षेप्ता । अक्षैप्सीत्। अक्षिप्त ॥ ( कृष ६ विलेखने )--कृषति कृषते । क्रष्टा, कर्ष्टा । कृष्यात् । कृक्षीष्ट । स्पृशमृशकृषेति सिज्वा । पक्षे क्सः । सिचि अम् वा--अक्राक्षीत् । अकार्क्षीत् । अकृक्षत्, । तङि लिङ्सिचाविति कित्वादम्न--अकृष्ट, अकृक्षाताम्, अकृक्षत । अकृक्षत, अकृक्षाताम्, अकृक्षन्त ॥ ( ऋषी १ गतौ )-**परस्मैपदी**-ऋषति । आनर्ष ॥ ( जुषी १ प्रीतिसेवनयोः)॥**आत्मनेपदिनश्चत्वारः**॥जुषते॥(ओ-विजी २ भयचलनयोः ) प्रायेणायमुत्पूर्वः । उद्विजते॥**विज इट्॥१।२।२॥**विजेः पर इडादिः प्रत्ययो ङिद्वत् । उद्विजिता । उद्विजिष्यते ॥ ( ओ--लजी ३ ओ--लस्जी ४ व्रीडायाम् )-लजते लेजे । लज्जते । ललज्जे ॥ **अथ परस्मैपदिनः**-(ओ-व्रश्चू ? छेदने ) ग्रहिज्या । वृश्चति । वव्रश्च, वव्रश्चतुः,वव्रश्चिथ, वव्रष्ठ।लिट्यभ्यासस्येति सम्प्रसारणं रेफस्य ऋकारः।( उरत् ) तस्याचः परस्मिन्निति स्थानिवद्भावान्न संप्रसारण इति वस्योत्वं न।व्रश्चिता, व्रष्टा । व्रश्चिष्यति, व्रक्ष्यति,वृश्च्यात्। अव्रश्चीत्।अव्राक्षीत् ।अव्रक्ष्यत्॥(व्यच२व्याजीकरणे)-विचति ।विव्याच, विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत्, अव्यचीत् । (**व्यचेः कुटादित्वमनसि** )-इति तु नेह प्रवर्तते, अनसीति पर्युदासेन कृन्मात्रविषयत्वात् ॥ (उछि ३ उञ्छे )--उञ्छति ॥ ( उच्छी ४ विवासे ) उच्छति ॥ ( ऋच्छ ५ गतीन्द्रियप्रलयमूर्तिभावेषु ) ॥ (ऋच्छत्यृताम् ) इति गुणः । द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट्। आनर्च्छ, आनर्च्छतुः । ऋच्छिता ॥ ( मिच्छ ६ उत्क्लेशे )--**उत्क्लेशः** पीडा । मिमिच्छ अमिच्छीत् ॥ ( जर्ज ७ चर्च ८ झर्झ ९ परिभाषणभर्त्सनयोः ) । ( त्वच १० संवरणे)-तत्वाच ॥ (ऋच ११ स्तुतौ )--आनर्च ॥ ( उब्ज १२ आर्जवे )॥( उज्झ १३ उत्सर्गे) ॥ (लुभ १४ विमोहने)-**विमोहनमाकुलीकरणम्** । लुभति । लोभिता लोब्धा। लोभिष्यति ॥ (रिफ १५ कत्थनयुद्धनिन्दाहिंसादानेषु )-रिफति । रिरेफ ॥ ( रिहेत्येके १६) "शिशुं न विप्रा मतिभी रिहन्ति"॥(तृप १७तृम्फ १८तृप्तौ)-आद्यः प्रथमान्तः।द्वितीयो द्वितीयान्तः।(द्वावपि द्वितीयान्तावित्यन्ये १९-२०)तृपति।ततर्प।तर्पिता । स्पृशमृशेति सिज्वि

कल्पः पौषादिकस्यैव।अङ्पवादत्वात्।तेनात्र नित्यं सिच्–अतर्पीत् । तृम्फति । शस्य ङित्त्वादनिदितामिति नलोपे ॥ ( **शे तृम्फादीनां नुम्वाच्यः** ) ॥ **आदिशब्दः** प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । तृम्फति । ततृम्फ । तृफ्यात् । (तुप २१ तुम्प२२ तुफ २३ तुम्फ २४ हिंसायाम्)–तुपति । तुम्पति । तुफति । तुम्फति॥ ( दृफ २५ दृम्फ २६ उत्क्लेशे) प्रथमः प्रथमान्तः । द्वितीयो द्वितीयान्तः । ( प्रथमो द्वितीयान्त इत्येके २७ ) । दृपति । दृम्फति ॥ ( ऋफ २८ ऋम्फ २९ हिंसायाम् ) ऋफति । आनर्फ । ऋम्फति । ऋम्फाञ्चकार ॥ ( गुफ ३० गुम्फ ३१ ग्रन्थे)–गुफति । जुगोफ । गुम्फति । जुगुम्फ ॥ ( उभ ३२ उम्भ ३३ पूरणे )–उभति । उवोभ । उम्भति । उम्भाञ्चकार ॥ (शुभ ३४ शुम्भ ३५ शोभार्थे )–शुभति । शुम्भति ॥ (दृभी ३६ ग्रन्थे )–दृभति ॥ ( चृती ३७ हिंसाग्रंथनयोः)–चर्तिता । सेऽसिचीति वेट्–चर्तिष्यति, चर्त्स्यति । अचर्तीत् ॥ (विधि ३८ विधाने)–विधति । वेधिता ॥ ( जुड ३९ गतौ)–(तवर्गपञ्चमान्त इत्येके ४० ) ॥ जुडति । "मरुतो जुनन्ति" ॥ ( मृड ४१ सुखने )–मृडति । मर्डिता॥(पृड् ४२ च)–पृडति ॥ ( पृण४३प्रीणने )–पृणति । पपर्ण॥(वृण४४च)–वृणति ॥ ( मृण ४५ हिंसायाम् ) ॥ (तुण४६कौटिल्ये )–तुतोण । ( पुण ४७ कर्मणि शुभे)पुणति॥(मुण४८प्रतिज्ञाने)॥(कुण४९शब्दोपकरणयोः) ॥ ( शुण ५०गतौ)–(द्रुण५१हिंसागतिकौटिल्येषु)॥(घुण५२घूर्ण५३भ्रमणे) ॥(षुर५४ऐश्वर्यदीप्त्योः) सुरति । सुषोर । आशिषि–सूर्यात् ॥(कुर५५शब्दे)–कुरति । कूर्यात् अत्र ( न भकुर्छुराम् )–इति निषेधो न । करोतेरेव तत्र ग्रहणा**दित्याहुः** । ( खुर ५६ छेदने ) ॥ ( मुर ५७ संवेष्टने ) ॥ ( क्षुर ५८ विलेखने ) ॥ ( घुर ५९ भीमार्तशब्दयोः ) ॥(पुर ६० अग्रगमने) ॥ (वृहू ६१ उद्यमने )–दन्त्योष्ठ्यादिः । (पवर्गीयादिरित्यन्ये ६२)॥ (तृहू ६३ स्तृहू ६४ तृंहू ६५ हिंसार्थाः)–तृहति । ततर्ह । स्तृहति । तस्तर्ह । तर्हिता, तर्ढा । स्तर्हिता, स्तर्ढा । अतृंहीत्, अताङ्क्षीत्, अताण्ढाम् ॥ (इष ६६ इच्छायाम् ) । इषगमीति छः–इच्छति । एषिता, एष्टा । एषिष्यति । इष्यात् । ऐषीत् ॥ ( मिष ६७ स्पर्धायाम्)–मिषति । मेषिता ॥ (किल ६८ श्वैत्यक्रीडनयोः) ॥ (तिल ६९ स्नेहने) ॥ (चिल ७० वसने)॥(चल ७१ विलसने) ॥( इल७२स्वप्नक्षेपणयोः )–( विल७३संवरणे)–दन्त्योष्ठ्यादिः ॥(बिल ७४ भेदने) ओष्ठ्यादिः । (णिल ७५ गहने)॥(हिल७६ भावकरणे) (शिल ७७ षिल ७८ उञ्छे)॥(मिल ७९ श्लेषणे)॥(लिख ८० अक्षरविन्यासे)–लिलेख । ( कुट ८१ कौटिल्ये)गाङ्कुटादिभ्य इति ङित्त्वम् ।चुकुटिथ । चुकोट, चुकुट । कुटिता। (पुट ८२ संश्लेषणे)॥(कुच ८३ संकोचने) ॥(गुज८४शब्दे)॥(गुड ८५ रक्षायाम् )॥(डिप ८६ क्षेपे ) ।(छुर ८७ च्छेदने) । ( न भकुर्छुराम् )–इति न दीर्घः–छुर्यात् । (स्फुट८८ विकसने)–स्फुटति । पुस्फोट ॥ ( मुट ८९ आक्षेपप्रमर्दनयोः ) ।( त्रुट ९० छेदने) वा भ्राशेति श्यन्वा–त्रुट्यति, त्रुटति । तुत्रोट । त्रुटिता । ( तुट ९१ कलहकर्मणि )–

१ अत्रोदित्पाठः प्रामादिकः।

तुटति । तुतोट । तुटिता ॥ ( चुट ९२ छुट ९३ छेदने ) ॥ ( जुड ९४ बन्धने ) ॥ (कड ९५ मदे )॥( लुट ९६ संश्लेषणे )--॥ (कृड९७घनत्वे ) **घनत्वं**--सान्द्रता।चकर्ड। कृडिता ॥ ( कुड ९८ बाल्ये ) ॥ (पुड ९९ उत्सर्गे ) ॥ ( घुट १०० प्रतिघाते) ॥ ( तुड १०१ तोडने) **तोडनं**--भेदः ॥ ( थुड १०२ स्थुड १०३ संवरणे )--थुडति। तुथोड । तुस्थोड ॥ ( खुड १०४ छुड १०५ **इत्येके** ) ॥ ( स्फुर १०६ स्फुल १०७ सञ्चलने ) । (स्फुर १०८ स्फुरणे ) । (स्फुल १०९ सञ्चलने **इत्येके**)॥ **स्फुरतिस्फुलत्योर्निर्निविभ्यः । ८ । ३ । ७६ ॥** षत्वं वा स्यात् । निष्फुरति । निस्स्फुरति। ( स्फर ११० इत्यकारोपधं **केचित्पठन्ति**) । पस्फार ॥ ( स्फुड ११२ चुड ११३ व्रुड ११४ संवरणे )। ( क्रुड ११५ भृड ११६ निमज्जन **इत्येके**) ॥ (गुरी ११७ उद्यमने)**अनुदात्तेत्**--गुरते । जुगुरे । गुरिता ॥ ( णू १ स्तवने )--दीर्घान्तः । "परिणूतगुणोदयः"॥**इतश्चत्वारः परस्मैपदिनः**--नुवति। अनुवीत् ॥(धू२विधूनने)--धुवति (गु३पुरीषोत्सर्गे) जुगुविथ, जुगुथ। गुता। गुष्यति। अगुषीत् । ( ह्रस्वादङ्गात् )--अगुताम्। अगुषुः ॥ (ध्रु४गतिस्थैर्ययोः)।(ध्रुव५इति पाठान्तरम्) आद्यस्य ध्रुवतीत्यादि- गुवतिवत्। द्वितीयस्तु सेट्--दुध्रुविथ । ध्रुविता । ध्रुविष्यति । ध्रूव्यात् । अध्रुवीत्, अध्रुविष्टाम् ॥ ( कुङ् १ शब्दे ) ( दीर्घान्त इति **कैयटादयः**) । कुविता । अकुविष्ट । ह्रस्वान्त इति **न्यासकारः** । कुता । अकुत ॥ **वृत् ॥ कुटादयो वृत्ताः ॥** ( पृङ् १ व्यायामे ) प्रायेणायं व्याङ्पूर्वः । रिङ् । इयङ्--व्याप्रियते । व्यापप्रे, व्यापप्राते । व्यापरिष्यते । व्यापृत, व्यापृषाताम् ॥ ( मृङ् २ प्राणत्यागे ) ॥ **म्रियतेर्लुङ्लिङोश्च।१।३।६१॥**लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । ङित्वं स्वरार्थम्। म्रियते । ममार । ममर्थ । मम्रिव । मर्तासि । मरिष्यति । मृषीष्ट । अमृत ॥ **अथ परस्मैपदिनः सप्त**--(रि १ पि २ गतौ) । लघूपधगुणादन्तरङ्गत्वादियङ्--रियति । पियति । रेता । पेता ॥ (धि ३ धारणे) ॥ (क्षि ४ निवासगत्योः ) ॥ ( षू ५ प्रेरणे) सुवति । सविता ॥ ( कॄ ६ विक्षेपे) किरति, किरतः । चकार, चकरतुः । करिता, करीता । कीर्यात् । अकारीत् ॥ **किरतौ लवने । ६ । १ । १४० ॥** उपात्किरतेः सुडागमः स्याच्छेदेऽर्थे । उपस्किरति॥**(अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम्**[1]॥ उपास्किरत् । उपचस्कार॥**हिंसायां प्रतेश्च । ६ । १ । १४१ ॥** उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम्। उपस्किरति । प्रतिस्किरति ॥ ( गॄ ७ निगरणे)॥**अचि विभाषा । ८ । २ । २१॥**गिरते रेफस्य लत्वं वा स्यादजादौ । गिरति, गिलति । जगार, जगाल । जगरिथ, जगलिथ । गरिता, गलिता ( दृङ् १ आदरे ) आद्रियते, आद्रियेते । आदद्रे । आदद्रिषे । आदर्ता । आदरिष्यते । आदृषीष्ट । आदृत, आदृषाताम् ॥ ( धृङ् २ अवस्थाने )--ध्रियते ॥--॥ **अथ परस्मै-**

१ सुट् कात्पूर्व इति सूत्रे अडभ्यासव्यवायेपीति वचनं कर्तव्यमित्यर्थः । ऋ ऌ वर्णयोः शकन्ध्वादिष्वित्यादिवत् ।

पदिनः षोडश--( प्रच्छ १ ज्ञीप्सायाम् )--पृच्छति।पप्रच्छ, पप्रच्छतुः।पप्रच्छिथ, पप्रष्ठ । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् ॥ ( वृत् ) ॥ **किरादयो वृत्ताः** ॥ (सृज २ विसर्गे) । ( विभाषा सृजिदृशोः )--ससर्जिथ, सस्रष्ठ । स्रष्टा । स्रक्ष्यति । सृजिदृशोरित्यमागमः । सृजेत् । सृज्यात् । अस्राक्षीत् ॥ ( टु--मस्जो ३ शुद्धौ )--मज्जति । ममज्ज । मस्जिनशोरिति नुम् ॥ **( मस्जेरन्त्यात्पूर्वो नुम्वाच्यः )** ॥ संयोगादिलोपः--ममङ्क्थ, ममज्जिथ । मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षीत्, अमाङ्क्ताम्, अमाङ्क्षुः ॥ ( रुजो ४ भङ्गे )--रोक्ता । रोक्ष्यति । अरौक्षीत्, अरौक्ताम् ॥ (भुजो ५ कौटिल्ये) ॥ रुजिवत् । ( छुप ६ स्पर्शे )--छोप्ता । अच्छौप्सीत् ॥ ( रुश ७ रिश ८ हिंसायाम् )--तालव्यान्तौ । रोष्टा । रोक्ष्यति । रेष्टा । रेक्ष्यति ॥ ( लिश ९ गतौ ) अलिक्षत् ॥ ( स्पृश १० संस्पर्शने )--स्प्रष्टा, स्पर्ष्टा । स्प्रक्ष्यति, स्पर्क्ष्यति । अस्प्राक्षीत्, अस्पार्क्षीत् । अस्पृक्षत् ॥ (विच्छ ११ गतौ) । गुपूधूपेत्यायः।आर्द्धधातुके वा।विच्छायति।विच्छायाञ्चकार, विविच्छ॥ ( विश १२ प्रवेशने )--विशति । वेष्टा ॥ ( मृश १३ आमर्शने )--**आमर्शनं** स्पर्शः । अम्राक्षीत्, अमार्क्षीत्, अमृक्षत् ॥ (णुद १४ प्रेरणे) । कर्त्रभिप्रायेऽपि फले **परस्मैपदार्थः पुनः पाठः** ॥ ( षद्लृ १५ विशरणगत्यवसादनेषु ) । सीदतीत्यादि--भौवादिकवत् । इह पाठो नुम्विकल्पार्थः--सीदती, सीदन्ती । **ज्वलादौ** पाठस्तु णार्थः--सादः । स्वरार्थश्च--शवनुदात्तः, शस्तूदात्तः ॥( शद्लृ १६ शातने ) । स्वरार्थ एव **पुनः पाठः** । शता तु नास्ति । (शदेः शितः) इति आत्मनेपदोक्तेः॥--॥**अथ षट् स्वरितेतः**--(मिल १ सङ्गमे) (मिल संश्लेषणे) इति पठितस्य **पुनःपाठः** कर्त्रभिप्राये तङर्थः ।मिलति, मिलते । मिमेल मिमिले ॥ ( मुचॢ २ मोक्षणे ) ॥ **शे मुचादीनाम्** ।७।१।५९॥नुम् स्यात्।मुञ्चति, मुञ्चते । मोक्ता । मुच्यात् । मुक्षीष्ट । अमुचत्--अमुक्त, अमुक्षाताम् ॥ (लुप्लृ ३ छेदने) लुम्पति, लुम्पते । अलुपत्, अलुप्त॥(विद्लृ ४ लाभे )--विन्दति, विन्दते।विवेद, विविदे । **व्याघ्रभूत्यादिमते** सेट्कोऽयम्--वेदिता । **भाष्यादिमते**ऽनिट्कः--वेत्ता, परिवेत्ता, परिरत्रवर्जने--ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः--तृन्तृचौ॥(लिप ५ उपदेहे)--**उपदेहो**--वृद्धिः । लिम्पति, लिम्पते।लेप्ता । लिपिसिचीत्यङ् । तङि तु--वा--अलिपत्, अलिपत, अलिप्त ॥ ( षिच ६ क्षरणे )--सिञ्चति, सिञ्चते । असिचत्, असिचत, असिक्त । अभिषिञ्चति ।अभ्यषिञ्चत् । अभिषिषेच ॥--॥ **अथ त्रयः परस्मैपदिनः**--( कृती १ छेदने )--कृन्तति । चकर्त । कर्तिता । कर्तिष्यति, कर्त्स्यति । अकर्तीत् ॥ ( खिद २ परिघाते )--खिन्दति । चिखेद । खेत्ता । अयं दैन्ये **दिवादौ रुधादौ** च ॥ ( पिश ३ अवयवे )--पिंशति । पेशिता । अयं **दीपनायामपि** । "त्वष्टा रूपाणि पिंशतु" ॥ **( वृत् )** ॥ **मुचादयस्तुदादयश्च वृत्ताः** ॥--॥

**इति तुदादयः** ॥

## ॥ अथ रुधादयः ॥

(रुधिर् १ आवरणे)–**नव स्वरितेत इरितश्च॥रुधादिभ्यः श्नम्**।३।१।७८॥ शपोऽपवादः। मित्त्वादन्त्यादचः परः।**नित्यत्वाद्गुणं** बाधते–रुणद्धि। (श्नसोरल्लोपः)। णत्वस्यासिद्धत्वादनुस्वारः। परसवर्णः।तस्यासिद्धत्वाण्णत्वं न। न पदान्तेति सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवत्–रुन्धः, रुन्धन्ति। रुन्धे। रोद्धा २। रोत्स्यति, रोत्स्यते रुणद्धु, रुन्धात्। रुन्धि। रुणधानि, रुणधै। अरुणत्, अरुन्धाम्, अरुणत्, अरुणः। अरुणधम्। अरुधत्। अरौत्सीत्, अरुद्ध ॥ ( भिदिर् २ विदारणे) भिनत्ति, भिन्ते। भेत्ता। भेत्स्यति ॥ अभिनत्, अभिनः। अभिनदम्। अभिन्त। अभिदत्, अभैत्सीत्, अभित्त ॥ ( छिदिर् ३ द्वैधीकरणे )–अच्छिदत्, अच्छैत्सीत्, अच्छित्त ॥ ( रिचिर् ४ विरेचने )–रिणक्ति, रिङ्क्ते, रिरेच, रिरिचे। रेक्ता। अरिणक्। अरिचत्, अरैक्षीत्, अरिक्त ॥ ( विचिर् ५ पृथग्भावे )–विनक्ति, विङ्क्ते ॥ ( क्षुदिर् ६ संपेषणे )–क्षुणत्ति, क्षुन्ते। क्षोत्ता। अक्षुदत्, अक्षौत्सीत्, अक्षुत्त ॥ (युजिर् ७ योगे )–योक्ता ॥( उ–छृदिर् ८ दीप्तिदेवनयोः )–छृणत्ति, छृन्ते। चच्छर्द। सेऽसिचीति वेट्–चच्छृदिषे, चच्छृत्से। छर्दिता। छर्दिष्यति, छर्त्स्यति। अच्छृदत्, अच्छर्दीत्, अच्छर्दिष्ट ॥ ( उ–तृदिर् ९ हिंसानादरयोः )–तृणत्तीत्यादि–छृणत्तिवत् ॥ ( कृती १ वेष्टने ) **परस्मैपदी**–कृणत्ति। आर्धधातुके **तौदादिकवत्** ॥ (ञि–इन्धी १ दीप्तौ)॥ **अथ त्रय आत्मनेपदिनः ॥ श्नान्नलोपः**।६।४।२३॥ श्नमः परस्य नस्य लोपः स्यात् ॥ ( श्नसोरल्लोपः )–इन्धे। इन्त्से। इन्धिता। इनधै। ऐन्ध,ऐन्धाः ॥(खिद२दैन्ये)-खिन्ते।खेत्ता॥ (विद३विचारणे)–विन्ते।वेत्ता॥**अथ परस्मैपदिनः**–(शिष्लृ१विशेषणे)-शिनष्टि, शिंष्टः, शिंषन्ति। शिशेषिथ। शेष्टा। शेक्ष्यति। हेर्धिः। जश्त्वम्। झरो झरीति वा डलोपः। अनुस्वारसवर्णौ–शिण्ढि, शिण्ड्ढि। शिनषाणि। अशिनट्। लृदित्त्वादङ्–अशिषत् ॥ ( पिष्लृ २ सञ्चूर्णने )–शिषिवत्। पिनष्टि ॥ ( भञ्जो ३ आमर्दने )–भनक्ति। बभञ्जिथ, बभङ्क्थ। भङ्क्ता ॥ ( भुज ४ पालनाभ्यवहारयोः )-भुनक्ति।भोक्ता भोक्ष्यति। अभुनक् ॥ ( तृह ५ हिसि ६ हिंसायाम् )॥ **तृणह इम्**। ७।३।९२॥ तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति सार्वधातुके।तृणेढि।तृण्ढः। ततर्ह। तर्हिता। अतृणेट् ॥ हिनस्ति। जिहिंस। हिंसिता ॥ (उन्दी ७ क्लेदने)–उनत्ति, उन्तः, उन्दन्ति। उन्दाञ्चकार। औनत्, औन्ताम्, औन्दन्। औनः, औनत्। औनदम् ॥ ( अञ्जू ८ व्यक्तिम्रक्षणकान्तिगतिषु ) -अनक्ति, अङ्क्तः, अञ्जन्ति। आनञ्ज। आनञ्जिथ, आनङ्क्थ। अङ्क्ता, अञ्जिता। अङ्ग्धि। अनजानि।आनक् ॥ **अञ्जेः सिचि**।७।२।७१॥ अञ्जेः सिचो नित्यमिट् स्यात्। आञ्जीत् ॥(तञ्चू९ सङ्कोचने)–तङ्क्ता, तञ्चिता ॥ (ओ–विजी १० भयचलयोः)–विनक्ति, विङ्क्तः। (विज.

१ व्यक्तिश्लक्षणकान्तीत्यादि पाठान्तरम्।

इट्)—इति ङित्त्वम्—विविजिथ, विजिता। अविनक्, अविजीत्॥ (वृजी ११ वर्जने)—वृणक्ति। वर्जिता॥ (पृची १२ सम्पर्के)—पृणक्ति। पपर्च॥—॥ **इति रुधादयः॥**

## ॥ अथ तनादयः॥

**अथ सप्त स्वरितेतः**—(तनु १ विस्तारे) (तनादिकृञ्भ्य उः)—तनोति। तन्वः, तनुवः। तनुते। ततान। तेने। तनु। अतनीत्, अतानीत्॥ **तनादिभ्यस्तथासोः।**।२।४।७९॥ तनादेः सिचो वा लुक् स्यात्तथासोः परतः। थासा **साहचर्यादेकवचनं** तशब्दो गृह्यते। तेनेह न—यूयमतनिष्ट, अतानिष्ट। अनुदात्तोपदेशेत्यनुनासिकलोपः। तङि—अतत, अतनिष्ट। अतथाः, अतनिष्ठाः॥ (षणु २ दाने) सनोति, सनुते। (ये विभाषा)—सायात्, सन्यात्। जनसनेत्यात्त्वम्—असात, असनिष्ट। असाथाः, असनिष्ठाः॥ (क्षणु ३ हिंसायाम्) क्षणोति, क्षणुते। ह्म्यन्तेति न वृद्धिः—अक्षणीत्, अक्षत, अक्षणिष्ट। अक्षथाः, अक्षणिष्ठाः॥ (क्षिणु ४ च) उप्रत्ययनिमित्तो लघूपधगुणः **(संज्ञापूर्वको विधिरनित्यः)**—इति न भवतीत्या**त्रेयादयः**। भवत्येवेत्य**न्ये**। क्षिणोति, क्षेणोति। क्षेणितासि, क्षेणितासे। अक्षेणीत्, अक्षित, अक्षेणिष्ट॥ (ऋणु ५ गतौ)—ऋणोति, अर्णोति, अर्णुतः, अर्णुवन्ति। आनृणे। अर्णितासि। आर्णीत्, आर्त, आर्णिष्ट। आर्थाः, आर्णिष्ठाः॥ (तृणु ६ अदने)—तृणोति, तर्णोति। तृणुते, तर्णुते। (घृणु ७ दीप्तौ)—जघर्ण, जघृणे॥ **अथ द्वावनुदात्तेतौ**—(वनु १ याचने) वनुते। ववने। **चान्द्रमते परस्मैपदी**—वनोति, ववान॥ (मनु २ अवबोधने)—मनुते। मेने॥ (डु—कृञ् १ करणे) करोति। (अत उत्सार्वधातुके)—कुरुतः। यण्। (न भकुर्छुराम्)—इति न दीर्घः—कुर्वन्ति॥ **नित्यं करोतेः।६।४।१०८॥** करोतेः प्रत्ययोकारस्य नित्यं लोपः स्याद्वमोः परयोः। कुर्वः। कुर्मः। चकर्थ। चकृव। कर्त्ता। करिष्यति॥ **ये च।६।४।१०९॥** कृञ उलोपः स्याद्यादौ प्रत्यये परे। कुर्यात्। आशिषि—क्रियात्, कृषीष्ट। अकार्षीत्। तनादिभ्य इति लुकोऽभावे—(ह्रस्वादङ्गात्)—इति सिचो लोपः—अकृत। अकृथाः॥ **सम्परिभ्यां करोतौ भूषणे।६।१।१३७॥ समवाये च।६।१।१३८॥** सम्परिपूर्वस्य करोतेः सुट् स्याद्भूषणे, सङ्घे चार्थे। संस्करोति। अलंकरोतीत्यर्थः॥ संस्कुर्वन्ति। सङ्घीभवन्तीत्यर्थः। **(सम्पूर्वस्य क्वचिदभूषणेऽपि सुट्)।** (संस्कृतं भक्षाः)—इति ज्ञापकात्। परिनिविभ्य इति षः—परिष्करोति। सिवादीनां वा-पर्यष्कार्षीत्, पर्यस्कार्षीत्। **उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च।६।१।१३९॥** उपात्कृञः सुट् स्यादेष्वर्थेषु, चात्प्रागुक्तयोः। **प्रतियत्नो**—गुणाधानम्। विकृतमेव **वैकृतम्**। **वाक्यस्याध्याहारः**—आकाङ्क्षितैकदेशपूरणम्॥ उपस्कृता कन्या। अलंकृतेत्यर्थः॥ उपस्कृता ब्राह्मणाः। समुदिता इत्यर्थः॥ एधो दकस्योपस्कु-

रुते । गुणाधानं करोतीत्यर्थः ॥ उपस्कृतं भुङ्क्ते । विकृतमित्यर्थः ॥ उपस्कृतं ब्रूते । वाक्याध्याहारेण ब्रूते इत्यर्थः ॥ ( सुट्कात्पूर्वः । ६ । १।१३५ ॥ ) (अड्भ्यासव्यवायेऽपि)इत्युक्तम् । संचस्कार। **कात्पूर्व इत्यादि भाष्ये प्रत्याख्यातम्** । तथा हि--पूर्वं धातुरुपसर्गेण युज्यते । अन्तरङ्गत्वात्सुट्।ततो द्वित्वम्।एवं च--(ऋतश्च संयोगादेर्गुणः)--संचस्करतुः ॥ कृसृभृ इति सूत्रे, (ऋतो भारद्वाजस्य)·इति सूत्रे च,--(**कृञोऽसुट इति वक्तव्यम्**) ॥तेन ससुट्कात्परस्येट्--संचस्करिथ, संचस्करिव । गुणोऽर्तीति सूत्रे (नित्यं छन्दसि--इति सूत्रान्नित्यमित्यनुवर्तते । नित्यं यः संयोगादिस्तस्येत्यर्थात्सुटि गुणो न--संस्क्रियात्।(ऋतश्च संयोगादेः)—इति लिङ्सिचोर्नेट् ।एकाच उपदेशे इति सूत्रादुपदेश इत्यनुवर्त्य उपदेशे यः संयोगादिरितिव्याख्यानात्—संस्कृषीष्ट । समस्कृत, समस्कृषाताम् ॥

**॥ इति तनादयः ॥**

**॥ अथ क्र्यादयः ॥**

(डु--क्रीञ् १ द्रव्यविनिमये )॥ **क्र्यादिभ्यश्श्ना**।३।१।८१॥क्रीणाति॥(ई हल्यघोः) क्रीणीतः । ईत्त्वात्पूर्वं झेरन्तादेशः--परत्वान्नित्यत्वादन्तरङ्गत्वाच्च । एवं झस्याद्भावः। ततः श्नाभ्यस्तयोरित्याल्लोपः । क्रीणन्ति । क्रीणीते, क्रीणाते, क्रीणते । चिक्राय, चिक्रियतुः । चिक्रयिथ,चिक्रेथ । चिक्रियिव।चिक्रियिषे ।क्रेता क्रेष्यति । क्रीयात्, क्रेषीष्ट अक्रैषीत्, अक्रेष्ट ॥ ( प्रीञ् २ तर्पणे, कान्तौ च)--**कान्तिः**--कामना । प्रीणाति, प्रीणीते ॥ ( श्रीञ् ३ पाके ) ॥ ( मीञ् ४ हिंसायाम् ) । ( हिनुमीना )--प्रमीणाति। प्रमीणीतः । मीनातिमिनोतीत्येज्विषये आत्त्वम्--ममौ, मिम्यतुः । ममिथ, ममाथ। मिम्ये । माता । मास्यति । मीयात्, मासीष्ट । अमासीत्, अमासिष्टाम् । अमास्त। ( षिञ ५ बन्धने ) सिनाति, सिनीते । सिषाय, सिष्ये । सेता ॥ ( स्कुञ् ६ आप्रवणे ) ॥ **स्तन्भुस्तुन्भुस्तन्भुस्कन्भुस्कुञ्भ्यःश्नुश्च** । ३ । १ । ८२ ॥ चात् श्ना । स्कुनोति, स्कुनुते, स्कुनाति, स्कुनीते । चुस्काव, चुस्कुवे । स्कोता। अस्कौषीत्, अस्कोष्ट ॥--॥ ( स्तन्भ्वादयश्चत्वारः सौत्राः । सर्वे रोधनार्था इत्येके) **माधवस्तु** प्रथमतृतीयौ स्तम्भार्थौ, द्वितीयो निष्कोषणार्थः, चतुर्थो धारणार्थ इत्याह। **सर्वे परस्मैपदिनः** । नलोपः--विष्टभ्नोति, विष्टभ्नाति । अवष्टभ्नोति, अवष्टभ्नाति। अवतष्टम्भ । ( जॄस्तम्भ्वित्यङ् वा )--व्यष्टभत्, व्यष्टम्भीत् । स्तुभ्नोति, स्तुभ्नाति। **वेस्कभ्नातेर्नित्यम्** । ८ । ३ । ७७ ॥ वेः परस्य स्कभ्नातेः सस्य षः स्यात् । विष्कभ्नोति, विष्कभ्नाति, स्कुभ्नोति, स्कुभ्नाति ॥ **हलश्श्नश्शानज्झौ** । ३ । १ । ८३ ॥ हलः परस्य श्नः शानजादेशः स्याद्धौ परे।स्तभान, स्तुभान, स्कभान, स्कुभान । पक्षे स्तभ्नुहीत्यादि :१--२--३--४ ॥ ( युञ् ७ बन्धने ) युनाति, युनीते । योता ॥ (क्नूञ् ८शब्दे )--क्नूनाति, क्नूनीते । क्नविता ॥ ( द्रूञ्९हिंसायाम् )--द्रूणाति, द्रूणीते ॥ (पूञ् १० पवने ) ॥ **प्वादीनां ह्रस्वः** । ७ । ३ । ८० ॥ शिति

परे।पुनाति,पुनीते।पविता॥ (लूञ् ११ छेदने)—लुनाति लुनीते॥( स्तॄञ् १२ आच्छादने )—स्तृणाति, स्तृणीते । तस्तार, तस्तरतुः । स्तरिता, स्तरीता । स्तृणीयात् । स्तृणीत । आशिषि—स्तीर्यात् । लिङ्सिचोरिति वेट् ॥ ( न लिङि । ७ । २ । ३९ ) ॥ वॄत इटो दीर्घो न स्याल्लिङि । स्तरिषीष्ट । ( उश्च )-इति कित्वम्।स्तीर्षीष्ट।(सिचि च परस्मैपदेषु)-इति न दीर्घः-अस्तारीत्,अस्तारिष्टाम्।अस्तारिष्ट। अस्तारिष्ट, अस्तरीष्ट, अस्तीर्ष्ट ॥ ( कॄञ् १३ हिंसायाम् )—कृणाति, कृणीते । चकार, चकरे ॥ ( वॄञ् १४ वरणे )—वृणाति, वृणीते । ववार, ववरे । वरिता-वरीता । आशिषि--( उदोष्ठ्यपूर्वस्य )—वूर्यात्, वरिषीष्ट, वूर्षीष्ट । अवारीत्, अवारिष्टाम् । अवरिष्ट, अवरीष्ट, अवूर्ष्ट ॥ ( धूञ् १५ कम्पने )—धुनाति, धुनीते । दुधविथ, दुधोथ । दुधुविव । धोता, धविता । स्तुसुधूञ्भ्य इतीट्—अधावीत्, अधविष्ट, अधोष्ट ॥ **अथ बध्नात्यन्ताः परस्मैपादिनः**–( शॄ १ हिंसायाम्) । (शॄदॄप्रां-ह्रस्वो वा )—इति ह्रस्वपक्षे यण् । अन्यदा–( ऋच्छत्यॄताम् )—इति गुणः—शश्रतुः शशरतुः (श्र्युकः किति )—इति निषेधस्य क्रादिनियमेन बाधः । शशरिव, शश्रिव । शरिता, शरीता। शृणीहि । शीर्यात् । अशारिष्टाम् ॥ (पॄ २ पालनपूरणयोः )—पप्रतुः, पपरतुः । आशिषि—पूर्यात् ॥ ( वॄ ३ वरणे ) भरण **इत्येके** ॥ ( भॄ ४ भर्त्सने ) भरणेऽप्**येके** ॥ ( मॄ ५ हिंसायाम् )—मृणाति । ममार ॥ ( दॄ ६ विदारणे )—ददरतुः, दद्रुः ॥ ( जॄ ७ वयोहानौ )—( झॄ ८ **इत्येके** )—( धॄ ९ **इत्यन्ये** ) ॥ ( नॄ १० नये ) ॥ ( कॄ ११ हिंसायाम् ) ॥(ऋ १२ गतौ) ऋणाति । अराञ्चकार । अरिता, अरीता।आर्णात्, आर्णीताम् । ईर्यात् । आरीत्, आरिष्टाम् ॥ ( गॄ १३ शब्दे ) ॥ ( ज्या १४ वयोहानौ ) । ( ग्रहिज्या० ) ॥ **हलः ।६।४।२॥** अङ्गावयवाद्धलः परं यत्सम्प्रसारणं तदन्तस्याङ्गस्य दीर्घः स्यात् । इति दीर्घे कृते–( प्वादीनां ह्रस्वः )—जिनाति । जिज्यौ, जिज्यतुः ॥ ( री १५ गतिरेषणयोः)—**रेषणं** वृकशब्दः ॥ ( ली १६ श्लेषणे ) । ( विभाषा लीयतेः ) इत्येज्विषये आत्वं वा—ललौ, लिलाय लाता, लेता ॥ ( व्ली १७ वरणे ) व्लिनाति ॥ ( प्ली १८ गतौ ) ॥ ( **वृत्** ) ॥ **ल्वादयो वृत्ताः । प्वादयोऽपीत्येके** ॥ ( व्री १९ वरणे ) ॥ ( भ्री २० भये ) भरण **इत्येके** ( क्षीष् २१ हिंसायाम् )—एषां त्रयाणां ह्रस्वः।**केषांचिन्मते तु न**॥(ज्ञा२२अवबोधने )॥(ज्ञाजनोर्जा)-जानाति।दीर्घनिर्देशसामर्थ्यान्न ह्रस्वः॥( बन्ध २३ बन्धने)बध्नाति।बबन्धिथ, बबन्ध।बन्धा। बन्धारौ । भन्त्स्यति । बधान । अभान्त्सीत् । पूर्वत्रासिद्धमिति भष्भावात्पूर्वं (झलो झलि) इति सिज्लोपः।प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न।प्रत्ययलक्षणं प्रति सिज्लोपस्यासिद्धत्वात्। अबान्द्धाम्, अभान्त्सुः ॥–॥ (वृङ् १ सम्भक्तौ )-वृणीते।वव्रे।ववृषे।ववृढ्वे। वरिता, वरीता । अवरिष्ट, अवरीष्ट, अवृत ॥–॥ ( श्रन्थ१विमोचनहर्षणयोः ) **इतः पर**

**स्मैपादिनः**। श्रथ्नाति। "ग्रन्थिग्रन्थीत्यादिना कित्वपक्षे एत्त्वाभ्यासलोपावप्यत्र वक्तव्यौ" इति **हरदत्तादयः**-श्रेथतुः, श्रेथुः। इदं कित्त्वं पितामपीति **सुधाकरमते**-श्रेथिथ। अस्मिन्नपि पक्षे णलि--शश्राथ। उत्तमे तु-शश्राथ, शश्रथ इति **माधवः** ॥ **तत्र मूलं मृग्यम्** ॥ ( मन्थ २ विलोडने )॥( श्रन्थ ३ ग्रन्थ ४ सन्दर्भे )--अर्थभेदात् श्रन्थेः पुनः **पाठः**। रूपं तूक्तम् ॥ ( कुन्थ ५ संश्लेषणे ) --संक्लेशे **इत्येके** ॥ कुथ्नाति। चुकुन्थ। ( कुथेति **दुर्गः** )॥ चुकोथ ॥ ( मृद ६ क्षोदे )--मृद्नाति। मृदान ॥ ( मृड ७ च ) अयं सुखेऽपि ष्टुत्वम्-मृड्णाति ॥ ( गुध ८ रोषे ) गुध्नाति ॥ ( कुष ९ निष्कर्षे )कुष्णाति। कोषिता॥**निरः कुषः । ७ ।२।४६॥** निरः परात्कुषो वलादेरार्धधातुकस्य इड्वा स्यात्। निष्कोषिता, निष्कोष्टा। निरकोषीत्। निरकुक्षत् ॥ (क्षुभ १० सञ्चलने) ॥ ( क्षुभ्नादिषु च। ८। '४ । ३९ ॥ ) क्षुभ्नाति क्षुभ्नीतः। क्षोभिता। क्षुभाण ॥ ( णभ ११ तुभ १२ हिंसायाम् ) नभ्नाति। तुभ्नाति। नभते। तोभते। इति **शपि**। नभ्यति। तुभ्यतीति **श्यनि**। (क्लिशू १३ विबाधने )--शाद् इति श्नुत्वानिषेधः-क्लिश्नाति। क्लेशिता क्लेष्टा। अक्लेशीत्। अक्लिक्षत् ॥ ( अश १४ भोजने ) अश्नाति। आश ॥ ( उ--ध्रस १५ उञ्छे ) उकार इत्। ध्रस्नाति ॥ ( उकारो धात्ववयव **इत्येके** )-उध्रसाञ्चकार। ( इष १६ आभीक्ष्ण्ये )--पौनःपुन्यं भृशार्थो वा **आभीक्ष्ण्यम्**। इष्णाति। तीषसहेत्यत्र **सहिनासाहचर्यादिकार**विकरणस्य तौदादिकस्यैव इषेर्ग्रहणं, न तु इष्यतीष्णात्यो-**रित्याहुः** ॥ एषिता ॥ **वस्तुतस्तु**-इष्णातेरपि इड्विकल्प उचितः। तथा च वार्तिकम्-( **इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः** ) इति ॥ ( विष १७ विप्रयोगे )-विष्णाति। वेष्टा ॥(प्रुष१८प्लुष१९स्नेहनसेवनपूरणेषु)-प्रुष्णाति। प्लुष्णाति ॥ ( पुष २० पुष्टौ)-पोषिता॥(मुष२१स्तेये)-मोषिता ॥ ( खच २२ भूतप्रादुर्भावे। भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः-खच्नाति ॥ ( वान्तोऽयम् २३ **इत्येके** )। **च्छ्वोश्शूडनुनासिके च। ६।४।१९॥** सतुक्कस्य, छस्य, वस्य, च क्रमात्--शू, ऊठ्, एतावादेशौ स्तोऽनुनासिके, क्वौ झलादौ च क्ङिति। खौनाति। चखाव। खविता। शानचः परत्वादूठि कृते हलन्तत्वाभावान्न शानच्। खौनीहि ॥ ( हेठ २४ च ) ष्टुत्वम्--हेठ्णाति ॥ (ग्रह २५ उपादाने)-**स्वरितेत्**। ग्रहिज्या०--गृह्णीते ॥ **ग्रहोऽलिटि दीर्घः । ७ । २ । ३७ ॥** एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यान्न तु लिटि। ग्रहीता। लिटितु जग्रहिथ। गृह्याद्, ग्रहीषीष्ट। ह्यन्तेति न वृद्धिः। अग्रहीष्टाम्। अग्रहीष्ट। अग्रहीषाताम्। अग्रहीषत।

॥ ॥ **इति क्र्यादयः** ॥ ॥

## ॥ अथ चुरादयः ॥

( चुर १ स्तेये )॥ **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् । ३ । १ । २५ ॥** एभ्यो णिच् स्यात्। चूर्णान्तेभ्यः

प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धं तेषामिह ग्रहणं **प्रपञ्चार्थम्** । चुरादिभ्यस्तु स्वार्थे । पुगन्तेति गुणः । सनाद्यन्ता इति धातुत्वम् । तिपूशबादि । गुणायादेशौ-चोरयति ॥ **णिचश्च । १ । ३ । ७४ ॥** णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । चोरयते। चोरयामास । चोरयिता । चोर्यात्, चोरयिषीष्ट । णिश्रीति चङ् । णौ चङीति ह्रस्वः । द्वित्वम् । ( हलादिः शेषः ) । ( दीर्घो लघोः )-इत्यभ्यासदीर्घः-अचूचुरत्, अचूचुरत ॥ ( चिति २ स्मृत्याम् )-चिन्तयति । अचिचिन्तत् । ( **चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम्**) । तेन चिन्त्यात्, चिन्त्यते इत्यादौ नलोपो न। चिन्तति । चिन्तेत् । एतच्च ज्ञापकं सामान्यापेक्ष**मित्येके** । अत एकहल्मध्य इत्यत्र **वृत्तिकृता** जगणतुः, जगणुः-इत्युदाहृतत्वात् । विशेषापेक्ष**मित्यपरे** । अत एव ( आधृषाद्वा )-इत्यस्य न वैयर्थ्यम् ॥ ( यत्रि ३ सङ्कोचे) -यन्त्रयति । यन्त्रेति पठितुं शक्यम् ॥ **यत्तु** इदित्करणाद्यन्त्रतीति **माधवेनोक्तम् । तच्चिन्त्यम्** । एवं कुद्रित-त्रिमन्त्रिषु ॥ ( स्फुडि ४ परिहासे )-स्फुण्डयति । इदित्करणात्-स्फुण्डति ॥ ( स्फुटि इति पाठान्तरम् ) । स्फुण्टयति ॥ ( लक्ष ५ दर्शनाङ्कनयोः ) ॥ ( कुद्रि ६ अनृतभाषणे) कुन्द्रयति ॥ ( लड ७ उपसेवायाम् ) लाडयति॥ ( मिदि ८ स्नेहने )-मिन्दयति । मिन्दति ॥ ( ओ-लडि ९ उत्क्षेपणे )-ओलण्डयति । ओलण्डति ॥ ( ओकार इ-**दित्येके** १०)-लण्डयति । लण्डति ॥ ( उकारादिरय**मित्यन्ये** ११)-उलण्डयति॥ ( जल १२ अपवारणे)॥(लज इत्येके १३)॥पीड १४ अवगाहने)-पीडयति॥**भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् । ७ । ४ । ३ ॥** एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ । अपीपिडत्, अपिपीडत् ॥ ( नट १५ अवस्यन्दने)-**अवस्यन्दनं** नाट्यम् ॥ ( श्रथ १६ मयत्ने )-मस्थाने **इत्येके** ॥ ( बध १७ संयमने )-बाधयति (बन्धेति **चान्द्रः १८**) ॥ ( पॄ १९ पूरणे)-पारयति । **दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गम्** ) तद्धि सेट्कत्वाय । एवं पृणातिपिपर्तिभ्यां परितेत्यादिसिद्धावपि परति, परतः, इत्यादिसिद्धिः फलम् ॥ ( ऊर्ज २० बलप्राणनयोः ) ॥ ( पक्ष २१ परिग्रहे ) ॥ ( वर्ण २२ चूर्ण २३ प्रेरणे ) ॥ ( वर्ण वर्णन **इत्येके** ) ॥ ( प्रथ २४ प्रख्याने )-प्राथयति । ( नान्ये मितोऽहेतौ ) इति वक्ष्यमाणत्वान्नास्य मित्त्वम् ॥ **अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् । ७ । ४ । ९५ ॥** एषामभ्यासस्य अकारोऽन्तादेशः स्याच्चङ्परे णौ । इत्त्वापवादः । अपप्रथत् ॥ ( पृथ २५ प्रक्षेपे ) ॥ **उर्ऋत् । ७ । ४ । ७ ॥** उपधाया ऋवर्णस्य स्थाने ऋत्स्याद्वा चङ्परे णौ । इररारामपवादः । अपीपृथत्, अपपर्थत् ॥ ( पथ २६ **इत्येके** ) पाथयति ॥ ( षम्ब २७ सम्बन्धे )-सम्बयति । अससम्बत् ॥ ( शम्ब च २८ )-अशशम्बत् ॥ ( साम्ब २९ **इत्येके** ) ॥ ( भक्ष ३० अदने ) ॥ ( कुट्ट ३१ च्छेदनभर्त्सनयोः-पूरण **इत्येके** ) । कुट्टयति । ( पुट्ट ३२ चुट्ट ३३ अल्पीभावे ) ॥ ( अट्ट ३४ षुट्ट ३५ अनादरे)-अट्टयति।अयं दोप

धः । ३६ ष्टुत्वस्यासिद्धत्वान्नन्द्रा इति निषेधः—आट्टिटत् ॥ ( लुण्ठ ३७ स्तेये )-लुण्ठयति । लुण्ठतीति--( लुठि स्तेये )--इति **भौवादिकस्य ।** ( शठ ३८ श्वठ ३९ असंस्कारगत्योः)॥(श्वठि ४० इत्येके ) ॥ ( तुजि ४१ पिजि ४२ हिंसाबलादाननिकेतनेषु ) तुञ्जयति।पिञ्जयति।इदित्करणात्--तुञ्जति, पिञ्जति॥ ( तुज ४३ पिज ४४ इति केचित् ) ( लजि ४५ लुजि ४६ इत्येके )। ( पिस ४७ गतौ)--पेसयति । पेसतीति तु **शपि गतम् ।** ( षान्त्व ४८ सामप्रयोगे)॥(श्वल्क ४९ वल्क ५० परिभाषणे)॥ (ष्णिह ५१ स्नेहने ( स्फिट ५२ इत्येके ) ॥ ( स्मिट ५३ अनादरे ) अषोपदेशत्वान्न षः—असिस्मिटत् ॥ ( ष्मिङ् ५४ अनादर इत्येके ) ङित्त्वस्यावयवेऽचरितार्थत्वा**ण्णिजन्तात्तङ्**--स्माययते ॥ ( श्लिष ५५ श्लेषणे ) ॥ ( पथि ५६ गतौ )--पन्थयति । पन्थति ॥ ( पिच्छ ५७ कुट्टने ) ॥ ( छदि ५८ संवरणे ) छन्दयतिं । छन्दति ॥ ( श्रण ५९ दाने )--प्रायेणायं विपूर्वः--विश्राणयति ॥ ( तड ६० आघाते )--ताडयति ॥ ( खड ६१ खडि ६२ कडि ६३ भेदने )--खाडयति । खण्डयति । कण्डयति ॥ ( कुडि ६४ रक्षणे ) ॥ ( गुडि ६५ वेष्टने ) रक्षण इत्येके ॥ ( कुठि ६६ इत्यन्ये )--अवकुण्ठयति । अवकुण्ठति । ( गुठि ६७ इत्यपरे) ॥ ( खुडि ६८ खण्डने ) ॥ ( वटि ६९ विभाजने)॥ (वडि ७० इत्येके)॥(मडि ७१ भूषायां, हर्षे च)॥(भडि ७२ कल्याणे)॥(छर्द ७३ वमने) ( पुस्त ७४ बुस्त ७५ आदरानादरयोः) । ( चुद ७६ सञ्चोदने ) ॥ (नक्क ७७ धक्क ७८ नाशने ) । णोपदेशलक्षणे पर्युदस्तोयम्--प्रनक्कयति ॥ (चक्क ७९ चुक्क ८० व्यथने) ॥ (क्षल ८१ शौचकर्मणि ) ॥ (तल ८२ प्रतिष्ठायाम्) ॥ ( तुल ८३ उन्माने )--तोलयति । अतूतुलत्। कथं "तुलयति तुलनाः" इत्यादि ॥ अतुलोपमाभ्यामिति निपातनादङन्तस्य तुलाशब्दस्य सिद्धौ ततो णिच् ॥ (दुल ८४ उत्क्षेपे)॥(पुल ८५ महत्त्वे )॥( चुल ८६ समुच्छ्राये) ( मूल ८७ रोहणे) ॥ ( कल ८८ विल ८९ क्षेपे ) ॥ ( बिल ९० भेदने ) ॥ ( तिल ९१ स्नेहने ) ॥ ( चल ९२ भृतौ) ॥ ( पाल ९३ रक्षणे) ॥ ( लूष ९४ हिंसायाम् ) ॥(शुल्ब ९५ माने—शूर्प ९६ च ) ॥ ( चुट ९७ च्छेदने ) ॥ ( मुट ९८ संचूर्णने ) ॥ ( पडि ९९ पसि १०० नाशने )--पण्डयति । पण्डति । पंसयति । पंसति ॥ ( व्रज १०१ मार्गसंस्कारगत्योः ) ॥ ( शुल्क १०२ अतिस्पर्शने) ॥ ( चपि १०३ गत्याम्)--चम्पयति । चम्पति।( क्षपि १०४ क्षान्त्याम् )--क्षम्पयति । क्षम्पति ॥ ( छजि १०५ कृच्छ्रजीवने)॥ ( श्वर्त १०६ गत्याम्)॥( श्वभ्र १०७ च ) ॥( **ज्ञप १०८ मिच्च**) अयं ज्ञाने ज्ञापने च वर्तते ॥ **मितां ह्रस्वः** ।६।४।९२॥ मितामुपधाया ह्रस्वः स्याण्णौ । ज्ञपयति ॥ ( **यमच १०९ परिवेषणे**)- चान्मित् । **परिवेषण**मिह वेष्टनम्, न तु भोजना नापि वेष्टना । यमयति चन्द्रम् । परिवेष्टत इत्यर्थः ॥ ( चह ११० परिकल्पने )--चहयति । अचीचहत् ॥ कथादौ वक्ष्यमाणस्य तु अदन्तत्वेनाग्लोपित्वाद्दीर्घसन्वद्भावौ न—अचचहत् ॥ ( चप १११ इत्येके)--चपयति ॥( रह ११२ त्याग इत्येके)-अरीरहत्।

कथादेस्तु—अररहत् ॥ ( बल ११३ माणने )--बलयति ॥ ( चिञ् ११४ चयने ) ॥ **चिस्फुरोर्णौ । ६ । १ । ५४ ॥** आत्त्वं वा स्यात्॥**अतिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ । ७ । ३ । ३६ ॥** अर्त्यादीनामादन्तानां च पुगागमस्स्याण्णौ चपयति । चययति। ( **ञित्करणसामर्थ्यादस्य णिज्विकल्पः** )--चयते । मणिचयति, मनिचयति ॥ ( **नान्ये मितोऽहेतौ** ) ॥ अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः । तेन शमादीनाममन्तत्वप्रयुक्तं मित्वं न ॥ ( घट्ट ११५ चलने ) ॥ मुस्त ११६ सङ्घाते ) ॥ ( खट्ट ११७ संवरणे ) ॥ ( षट्ट ११८ स्फिट्ट ११९चुबि१२०हिंसायाम्)॥(पूल१२१सङ्घाते)॥(पूर्ण१२२इत्येके)॥(पुणेत्यन्ये१२३) ( पुंस १२४ अभिवर्धने ) ॥ ( टकि १२५ बन्धने ) टङ्कयति । टङ्कति ॥ ( धूस१२६ कान्तिकरणे)--धूसयति।दन्त्यान्तः(मूर्धन्यान्त इत्येके१२७)।(तालव्यान्त इत्यपरे१२८) ( कीट १२९ वर्णे ) ॥ (चूर्ण१३०सङ्कोचने)॥(पूज१३१पूजायाम्॥(अर्क१३२स्तवने)॥ तपन इत्येके ॥ ( शुठ १३३ आलस्ये) ॥ ( शुठि १३४ शोषणे )--शुण्ठयति । शुण्ठति ॥ ( जुड १३५ प्रेरणे ) ॥ ( गज १३६ मार्ज १३७ शब्दार्थौ ) गाजयति । मार्जयति ॥ ( मर्च १३८ च )--मर्चयति ॥ ( घृ १३९ प्रस्रवणे )--स्रावण इत्येके ॥ (पचि १४० विस्तारवचने ) पञ्चयति ।पञ्चति।पञ्चते इति व्यक्तार्थस्य **शपि गतम्** ॥ (तिज१४१ निशाने) तेजयति ॥ ( कॄत १४२ संशब्दने ) ॥ **उपधायाश्च । ७ । १ । १०१ ॥** धातोरुपधाभूतस्य ॠत इत्स्यात् । रपरत्वम् । ( उपधायां च )—इति दीर्घः—कीर्तयति । ( उॠत् )अचीकृतत्,अचिकीर्तत्॥( वर्ध१४३ च्छेदनपूरणयोः)॥ (कुबि १४४ आच्छादने ) कुम्बयति ॥ ( कुभि १४५ इत्येके )॥ ( लुबि १४६ तुबि १४७ अदर्शने)अर्दने इत्येके ॥ ( ह्लप १४८ व्यक्तायां वाचि ) । ( क्लपेत्येके १४९ ) । (चुटि १५०च्छेदने ) ( इल १५१ प्रेरणे ) एलयति । ऐलिलत् । ( म्रक्ष १५२ म्लेच्छने ) ॥(म्लेच्छ १५३अव्यक्तायां वाचि ) ॥ ( ब्रूस १५४ बर्ह १५५ हिंसायाम् ) ॥ **केचिदिह**—( गर्ज १५६ मर्द१५७शब्दे ), (गर्ध १५८ अभिकाङ्क्षायाम् ) इति **पठन्ति**॥(गुर्द१५९पूर्व१६०निकेतने ) ॥ ( जसि १६१ रक्षणे ) मोक्षण इति **केचित्**।जंसयति।जंसति (ईड१६२ स्तुतौ ( जसु १६३ हिंसायाम् ) ॥ ( पिडि १६४ सङ्घाते ) ॥ ( रुष १६५ रोषे ) ( रुठ १६६ इत्येके ) ॥ ( डिप १६७ क्षेपे ) । ( ष्टुप १६८ समुच्छ्राये ) ॥ **आकुस्मादात्मनेपदिनः** )॥( कुस्म नाम्नो वा इति वक्ष्यते,तमभिव्याप्येत्यर्थः।।अकर्तृगामिफलार्थमिदम्। चित१ सञ्चेतने ) चेतयते । अचीचितत ॥ ( दशि २ दंशने )-दंशयते । अददंशत । इदित्त्वाण्णिजभावे-दंशति।आकुस्मीयमात्मनेपदं **णिच्सन्नियोगेनैवेति व्याख्यातारः**।नलोपे**सञ्जिसाहचर्याद्** भ्वादेरेव ग्रहणम् । ( दसि ३ दर्शनदंशनयोः)दंसयते । दंसति ( दसेत्यप्येके ४ ) ॥ ( डप ५ डिप ६ सङ्घाते )॥(तत्रि ७ कुटुम्बधारणे )-तन्त्रयते॥ (चान्द्रास्तु धातुद्वयम्)-इति मत्वा कुटुम्बयते इत्युदाहरन्ति।।(मत्रि ८ गुप्तपरिभाषणे ) ॥

( स्पश ग्रहणसंश्लेषणयोः ९ )॥( तर्ज १० भर्त्स ११ तर्जने )॥ ( बस्त १२ गन्ध १३ अर्दने ) बस्तयते । गन्धयते ॥ ( विष्क १४ हिंसायाम् ) ॥ ( हिष्केत्येके १५ )॥ ( निष्क १६ परिमाणे ) ॥ ( लल १७ ईप्सायाम् ) ॥ (कण १८ संकोचे) ॥(तूण १९ पूरणे) ॥ ( भ्रूण २० आशाविशङ्कयोः)॥(शठ २१ श्लाघायाम्) ॥ ( यक्ष २२ पूजायाम्) ( स्मय २३ वितर्के )॥( गूर २४ उद्यमने ) ॥ (शम २५ लक्ष २६ आलोचने )। नान्ये मित इति मित्त्वनिषेधः—शामयते ॥ ( कुत्स २७ अवक्षेपणे ) ॥ ( त्रुट २८ छेदने )॥(कुट २९ इत्येके ) ॥ ( गल ३० स्रवणे)॥(भल ३१ आभण्डने )॥(कूट ३२ आप्रदाने) अवसादन इत्येके ॥ ( कुट्ट ३३ प्रतापने) ॥ ( वञ्चु ३४ प्रलम्भने ) ॥ ( वृष३५ शक्तिबन्धने) **शक्तिबन्धनं**—प्रजननसामर्थ्यं, शक्तिसंबंधश्च । वर्षयते॥(मद३६ तृप्तियोगे)—मदयते ॥ ( दिवु ३७ परिकूजने ) ॥ ( गृ ३८ विज्ञाने )—गारयते ॥ ( विद ३९ चेतनाख्यानविवासेषु )—वेदयते ॥ श्लो० ॥ ( सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे । विन्दते विन्दति प्राप्तौ, श्यन्लुक्श्नम्शेष्विदं क्रमात् ॥ १ ॥) ( मान ४० स्तम्भे )—मानयते ॥ ( यु ४१ जुगुप्सायाम् )—यावयते ॥ (कुस्म ४२ नाम्नो वा ) कुस्मेति धातुः कुत्सितस्मयने वर्तते । कुस्मयते । अचुकुस्मत ॥ **अथ वा** कुस्मेति प्रातिपदिकम् । ततो धात्वर्थे णिच् ॥ **इत्याकुस्मीयाः ॥**

( चर्च १ अध्ययने) ॥ ( बुक्क २ भाषणे ) ॥ ( शब्द ३ उपसर्गादाविष्कारे च)-**चाद्भाषणे** । प्रतिशब्दयति । प्रतिश्रुतमाविष्करोतीत्यर्थः । ( अनुपसर्गाच्च )—आविष्कारे इत्येव । शब्दयति ॥ ( कण ४ निमीलने )—काणयति । ( णौ चङ्युपधाया ह्रस्वः ) ॥ ( **काण्यादीनां वा** )—इति विकल्प्यते—अचीकणत्, अचकाणत् ॥ (जभि ५ नाशने)—जम्भयति । जम्भति॥(षूद ६ क्षरणे)—सूदयति । असूषुदत् ॥(जसु ७ ताडने)—जासयति । जसति॥( पश ८ बन्धने)—पाशयति॥ ( अम ९ रोगे)—आमयति । नान्ये मित इति निषेधः । अम गत्यादौ **शपि गतः** । तस्माद्धेतुमण्णौ—(न कम्यमिचमाम् )—इति निषेधः—आमयति ॥ ( चट १० स्फुट ११ भेदने ) विकासे **शशपोः** स्फुटति स्फोटते **इत्युक्तम्** । (घट १२ सङ्घाते )—घाटयति ॥ ( **हन्त्यर्थाश्च** )—नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्त इत्यर्थः ॥ ( दिवु १३ मर्दने ) **उदित्त्वाद्देवतीत्यपि**१४॥( अर्ज१५ प्रतियत्ने )—अयमर्थान्तरेऽपि । द्रव्यमर्जयति ॥ ( घुषिर् १६ अविशब्दने )—घोषयति । ( घुषिरविशब्दने ) इति सूत्रेऽविशब्दन इति निषेधाल्लिङ्गाद्—( **अनित्योऽस्य णिच्** )—घोषति । इरित्त्वादङ्वा—अघुषत् अघोषीत् । ण्यन्तस्य तु—अजूघुषत्॥(**आङः क्रन्द १७सातत्ये**)—**भौवादिकः** क्रन्दधातुराह्वानाद्यर्थ उक्तः । स एवाङ्पूर्वो णिचं लभते सातत्ये । आक्रन्दयति॥**अन्ये तु** आङ्पूर्वो घुषिः क्रन्दसातत्ये **इत्याहुः** ॥ आघोषयति ॥ ( लस१८ शिल्पयोगे) ॥ (तसि १९ भूष२० अलङ्करणे )—अवतंसयति । अवतंसति ॥ भूषयति ॥ ( अर्ह २१ पूजायाम् )॥

(ज्ञा२२नियोगे)—आज्ञापयति ॥ (भज २३ विश्राणने) ॥ (शृधु२४प्रहसने)—अशशर्धत्, अशीशृधत् ॥ (यत २५ निकारोपस्कारयोः) ॥ (रक २६ लग २७ आस्वादने) (रघे २८इत्येके)॥(रगेत्यन्ये२९)॥ (अञ्चु ३०विशेषणे)—अञ्चयति।(**उदित्त्वमिड्विकल्पार्थम्**)। अत एव विभाषितो णिच्—अञ्चति। **एवं** शृधुजसुप्रभृतीनामपि बोध्यम्। (लिगि ३१ चित्रीकरणे)—लिङ्गयति। लिङ्गति ॥ (मुद ३२संसर्गे) मोदयति सक्तून् घृतेन ॥ (त्रस ३३ धारणे) ग्रहणे **इत्येके**। वारणं **इत्यन्ये** ॥ (उध्रस३४उञ्छे)। (उकारो धात्ववयव **इत्येके**) नेत्यन्ये। ध्रासयति।उध्रासयति।(मुच३५प्रमोचने,मोदने च) ॥ (वस ३६ स्नेहच्छेदापहरणेषु) ॥ (चर३७संशये)॥(च्यु३८सहने)हसने चेत्येके च्यावयति। (च्युसेत्येके३९) च्योसयति ॥ (भुवोऽवकल्कने४०) **अवकल्कनं** मिश्रीकणमित्येके। चिन्तनमित्यन्ये। भावयति ॥ (कृपेश्च४१) कल्पयति ॥ (**आ स्वदः सकर्मकात्**) स्वदिमभिव्याप्य सम्भवत्कर्मभ्य एव णिच्॥(ग्रस१ग्रहणे)ग्रासयति फलम्। (पुष २ धारणे) ॥ पोषयत्याभरणम्॥(दल३विदारणे) दालयति॥ (पट४पुट५लुट६कुट ७ तुजि ८ मिजि ९ पिजि१०लुजि११भजि१२लघि१३ त्रसि१४पिसि१५कुसि१६दशि १७ कुशि १८ घट १९ घटि २० बृहि २१ बर्ह २२ बल्ह २३ गुप २४ धूप २५ विच्छ २६ चीव २७ पुथ २८ लोकृ २९ लोचृ ३०णद३१कुप३२ लुप ३३ तर्क३४वृतु ३५ वृधु ३६ भाषार्थाः)—पाटयति पोटयति। लोटयति।तुञ्जयति।तुञ्जति।एवं परेषाम्। घाटयति। घण्टयति ॥ **नाग्लोपिशास्वृदिताम्। ७। ४। २।** ॥ णिचि अग्लोपिनः शास्तेर्ऋदितां च उपधाया ह्रस्वो न स्याच्चङ्परे णौ। अलुलोकत्। अलुलोचत्। वर्तयति।वर्धयति।(**उदित्त्वाद्वर्तति,वर्धति**)॥(रुट ३७लजि ३८ अजि३९दसि४०भृशि ४१ रुशि ४२ रुसि ४३ शीक ४४ नट ४५ पुटि ४६ जिवि ४७ रघि ४८ लघि ४९ अहि ५० रहि ५१ महि ५२ च) ॥ (तडि ५३ नडि५४नल५५च)।(पूरी५६ आप्यायने) ईदित्त्वं निष्ठायामिण्निषेधाय। अत एव णिज्वा—पूरयति। पूरति ॥ (रुज ५७ हिंसायाम्) ॥ (ष्वद ५८ आस्वादने)। (स्वाद५९इत्येके)। असिष्वदत्। दीर्घस्य त्वषोपदेशत्वात्—असिष्वदत्। (**आ धृषाद्वा**) ॥ इत उर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य ॥ (युज१पृच२संयमने)—योजयति। योजति। अयौक्षीत्। पर्चयति।पर्चति। पर्चिता। अपर्चीत् ॥ (अर्च३पूजायाम्) ॥ (षह ४ मर्षणे)—साहयति। "स एवायं नागः सहति कलभेभ्यः परिभवम्" ॥ (ईर ५ क्षेपे)॥(ली६द्रवीकरणे)—लाययति। लयति। लेता ॥ (वृजी७वर्जने)—वर्जयति। वर्जति ॥ (वृञ् ८ आवरणे)—वारयति। वरति। वरते। वरिता। वरीता ॥) जॄ ९ वयोहानौ)—जारयति। जरति। जरिता। जरीता ॥ (चि १० च)—चाययति। चयति। चेता ॥ (रिच ११ वियोजनसंपर्चनयोः)—रेचयति। रेचति। रेक्ता ॥ (शिष १२ असर्वोपयोगे)—शेषयति। शेषति। शेष्टा। अशिक्षत्। अयं विपूर्वोऽतिशये ॥ (तप १३ दाहे)—तापयति। तपति।

तप्ता ॥ ( तृप १४ तृप्तौ ) सन्दीपने इत्येके । तर्पयति । तर्पति । तर्पिता ॥ ( छृदी १५ सन्दीपने )-छर्दयति । छर्दति । छर्दिता।छर्दिष्यति । सेऽसिचीति विकल्पो न साहचर्यात्तत्र रौधादिकस्यैव ग्रहणात्॥(चृप१६छृप१७दृप१८सन्दीपन इत्येके )चर्पयति। छर्पयति॥(दृभी१९भये )-दर्भयति । दर्भति।दर्भिता॥( दृभ २०सन्दर्भे )-अयं तुदादावीदित् ॥ (श्रथ २१मोक्षणे ) हिंसायामित्येके॥(मी२२गतौ )-माययति ।मयति।मिता॥ (ग्रन्थ २३ बन्धने )-ग्रन्थयति।ग्रन्थति ॥ ( शीक २४ आमर्षणे ) ॥ ( चीक २५ च)॥ ( अर्द २६ हिंसायाम् )-**स्वरितेत्**-अर्दयाति । अर्दति, अर्दते ॥ ( हिसि २७ हिंसायाम् )-हिंसयति । हिंसति । हिनस्तीति **श्नमि गतम्** ॥ ( अर्ह २८ पूजायाम्)- ( आङः षद २९ पद्यर्थे )-आसादयति, आसीदति, पाघ्रेति सीदादेशः । आसत्ता। आसात्सीद् ॥ ( शुन्ध ३० शौचकर्मणि ) शुन्धिता । अशुन्धीत् । अशुन्धिष्टाम् । ( छद ३१ अपवारणे )-**स्वरितेत्** ॥ ( जुष ३२ परिकर्णने ) **परिकर्णनमूहो**, हिंसा वा। परितर्पण इत्यन्ये।**परितर्पणं** परितृप्तिक्रिया।जोषयति । जोषति।प्रीतिसेवनयोर्जुषते इति **तुदादौ** ॥ ( धूञ् ३३ कम्पने )-णावित्यधिकृत्य-( धूञ्प्रीञोर्नुग्वक्तव्यः )॥धूनयति। धवति । धवते ॥ **केचित्तु** धूञ्प्रीणोरिति पठित्वा **प्रीणातिसाहचर्या**द्धूनातेरेव नुकमाहुः॥धावयति ॥ अयं **स्वादौ क्र्यादौ तुदादौ च । स्वादौ ह्रस्वश्च**। तथा च कविरहस्ये-( धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटिता तिमुक्तम् ॥ वायुर्विधूनयति चम्पकपुष्परेणून्यत्कानने धवति चन्दनमञ्जरीश्च॥ १॥ )(प्रीञ् ३४तर्पणे)-प्रीणयति।धूञ्प्रीणोरिति **हरदत्तोक्तपाठे** तु-माययति।मयति।मयते॥(श्रन्थ ३५ग्रन्थ३६सन्दर्भे )-॥ (आप्ल३७लम्भने )-आपयति । आपति । आप्ता । आपत्। **स्वरितेदयमित्येके**-आपते ॥ (तनु ३८श्रद्धोपकरणयोः ) । (उपसर्गाच्च दैर्घ्ये) तानयति । वितानयति । तनति । वितनति॥ ( चन३९श्रद्धोपहननयोरित्येके )-चानयति। चनति ॥ ( वद ४० सन्देशवचने) वादयति । **स्वरितेत्**-वदति, वदते।**अनुदात्तेदित्येके**। ववदतुः । ववदिथ । ववदे ।वद्यात् ॥( वच ४१ परिभाषणे )-वाचयति।वचति। वक्ता । अवाक्षीत् ॥ ( मान ४२ पूजायाम् )-मानयति । मानति । मानिता । विचारणे तु **भौवादिको** नित्यसन्नन्तः।स्तम्भे-मानयते-इत्याकुस्मीयाः।मन्यते इति **दिवादौ**॥ मनुते इति **तनादौ** च ॥ ( भू ४३ प्राप्तौ )-आत्मनेपदी-भावयते भवते । णिच्सन्नियोगेनैवात्मनेपदमित्येके । भवति ॥ (गर्ह४४ विनिन्दने )॥ ( मार्ग ४५ अन्वेषणे ) ॥ ( कठि ४६ शोके ) उत्पूर्वोऽयमुत्**कण्ठायाम्** । कण्ठते इत्यात्मनेपदी **गतः** ॥ ( मृजू ४७ शौचालङ्कारयोः )-मार्जयति । मार्जति । मार्जिता । मार्ष्टा ॥ ( मृष४८तितिक्षायाम् )-**स्वरितेत्**-मर्षयति । मर्षति । मर्षते । मृष्यति मृष्यते इति **दिवादौ** ॥ सेचने शपि मर्षति ॥ ( धृष ४९ प्रसहने )-धर्षयति । धर्षति ॥ **इत्याधृषीयाः** ॥

**अथादन्ताः**—( कथ१ वाक्यप्रबन्धे । अल्लोपस्य स्थानिवद्भावान्न वृद्धिः—कथयति।अग्लोपित्वान्न दीर्घसन्वद्भावौ—अचकथत् ॥ ( वर २ ईप्सायाम् )—वरयति । वारयतीति **गतम्** । ( गण ३ संख्याने )—गणयति ॥ **ई च गणः** । ७।४।९७॥गणेरभ्यासस्य ईत्स्याच्चङ्परे णौ, चादत् ॥ अजीगणत्, अजगणत् ॥ः( शठ ४ श्वठ ५ सम्यगवभाषणे ) । ( पट ६ वट ७ ग्रन्थे ) ॥ (रह ८ त्यागे ) अररहत् ॥ ( स्तन ९ गदी १० देवशब्दे )—स्तनयति । गदयति । अजगदत् ॥ (पत ११ गतौ वा) वा णिजन्तः।(वाऽदन्त इत्येके १२ ) **आद्ये**—पतयति, पतति ।पताश्चकार, अपतीत् । **द्वितीये**—पातयति।अपीपतत् ॥ ( पष १३ अनुपसर्गात् ) गतावित्येव । पषयति ॥ ( स्वर १४ आक्षेपे )—स्वरयति ॥ ( रच १५ प्रतियत्ने ) —रचयति । ( कल १६ गतौ, संख्याने च ) ॥ ( चह १७ परिकल्कने )—**परिकल्कनं** दम्भः, शाठ्यं च॥(मह १८पूजायाम् )-महयति । महतीति **शपि गतम्** ॥ ( सार १९ कृप २० श्रथ २१ दौर्बल्ये )--सारयति । कृपयति । श्रथयति ॥(स्पृह २२ ईप्सायाम् ) ॥ ( भाम २३ क्रोधे)—अबभामत् । ॥ ( सूच २४ पैशुन्ये )—सूचयति । अषोपदेशत्वान्न षः । असूसुचत्॥ (खेट२५भक्षणे ) ॥ ( तृतीयान्त **इत्येके** २६ ) ॥ ( खोट इत्यन्ये २७) ॥ ( क्षोट२८क्षेपे)॥(गोम२९ उपलेपने )—अजुगोमत् ॥ ( कुमार ३० क्रीडायाम् )—अचुकुमारत् ॥ ( शील ३१ उपधारणे ) **उपधारण**मभ्यासः॥(साम ३२ सान्त्वप्रयोगे ) अससामत्। (साम सान्त्वने)-इत्यतीतस्य तु—असीषमत् ॥ ( वेल ३३ कालोपदेशे )—वेलयति ॥ ( काल ३४ इति पृथग्धातु**रित्येके** )—कालयति ॥ ( पल्यूल ३५ लवनपवनयोः ) ॥ ( वात ३६ सुखसेवनयोः )—गतिसुखसेवने**ष्वित्येके** । वातयति । अववातत् ॥ ( गवेष ३७ मार्गणे )—अजगवेषत् ॥ ( वास३८ उपसेवायाम् )॥(निवास३९आच्छादने)-अनिनिवासत् ॥ ( भाज ४० पृथक्कर्मणि )॥( सभाज ४१ प्रीतिदर्शनयोः)।प्रीतिसेवनयो**रित्यन्ये** । सभाजयति ॥ ( ऊन ४२ परिहाणे )—ऊनयति । ओः पुयण्जि इति सूत्रे पययोरिति वक्तव्ये वर्गप्रत्याहारजग्रहो लिङ्गम्(**णिच्यच आदेशो न स्याद्द्वित्वे कार्ये** )—इति। **यत्र द्विरुक्तावभ्यासोत्तरखंडस्याद्योऽच् प्रक्रियायां परिनिष्ठिते रूपे वा अवर्णो लभ्यते तत्रैवायं निषेधः**।ज्ञापकस्य सजातीयापेक्षत्वात् । तेनाचिकीर्त्तदिति सिद्धम्।प्रकृते तु न शब्दस्य द्वित्वम्।तत उत्तरखण्डेऽल्लोपः-औननत्।मा भवानूननत्॥(ध्वन४३शब्दे )-अदध्वनत्॥ ( कूठ४४परितापे )-परिदाह **इत्यन्ये**॥(सङ्केत४५ग्राम४६कुण४७गुण४८चामन्त्रणे) चात्कूटोऽपिकूटयति।सङ्केतयति। ग्रामयति।कुणयति।गुणयति।पाठान्तरम्-(केत ४९श्रावणे निमन्त्रणे च )-केतयति।निकेतयति ॥(कुण५० गुण५१चामन्त्रणे)चकारात्केतने।(कूण५२संकोचनेऽपि)।(स्तेन५३चौर्ये) अतिस्तेनत्॥**आ गर्वादात्मनेपादिनः**-(पद१गतौ) पदयते।अपपदत॥(गृह२ग्रहणे)गृहयते ॥ ( मृग ३ अन्वेषणे)--मृगयते।मृग्यतीति **कण्ड्वादिः** ॥ ( कुह ४ विस्मापने)॥(शू-

देवताः इममिति—चरुः।त्सरुः—खड्गादिमुष्टिः । तनुः स्वल्पम् ।"स्त्रियां मूर्तिस्तनुस्तनूः"। धनुः-शस्त्रविशेषः । "धनुषा च धनुं विदुः"।"धनुरिवाजनि वक्रः" इति **श्रीहर्षः** । मयुः—किंनरः।मद्गुः-पानीयकाकिकेति **रभसः**।न्यङ्क्वादित्वात्कुत्वम् । जश्त्वेन सस्य दः॥**अणश्च** ॥८॥"लवलेशकणाणवः"।चात्कटिवटिभ्याम्। कटति रसनां—कटुः । वटतीति वटुः ॥ **धान्ये नित्**॥९॥धान्ये वाच्येऽण उप्रत्ययः स्यात्, स च नित् ।नित्त्वादाद्युदात्तः।प्रियङ्गवश्च मेऽणवश्च मे । "व्रीहिभेदस्त्वणुः पुमान्" । निद्ग्रहणं फलिपाटीत्यादिसूत्रमभिव्याप्य सम्बध्यते॥**शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** ॥१०॥ शृणातीति–शरुः ।"शरुरायुधकोपयोः" । स्वर्यन्ते माणाः अनेन स्वरुर्वज्रम्।स्नेहुर्व्याधिः ।चन्द्र इत्यन्ये । त्रपु सीसम् । "पुंसि भूम्न्यसवः माणाः"। "वसुर्हदेऽग्नौ योक्त्रेशौ वसु तोये धने मणौ" । हनुर्वक्त्रैकदेशः। क्लेदुश्चन्द्रः । बन्धुः । मनुः । **चात्**—( बिदि अवयवे )—बिन्दुः ॥ **स्यन्देः सम्प्रसारणं धश्च** ॥ ११ ॥ "देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम" इत्यमरः॥**उन्देरिच्चादेः** ॥१२॥ उनत्ति इन्दुः॥**ईषेः किच्च** ॥१३॥ईषेरुः स्यात्स च कित्, आदेरिकारादेशश्च । ईषते हिनस्ति—इषुः—शरः । "इषुर्द्वयोः"॥**स्कन्देः सलोपश्च** ॥१४॥कन्दुः॥**सृजेरसुम् च**॥१५॥चात्सलोप उप्रत्ययश्च।रज्जुः॥**कृतेराद्यन्तविपर्ययश्च**॥१६॥ककारतकारयोर्विनिमयः । तर्कुः—सूत्रवेष्टनम्॥**नावञ्चेः** ॥१७॥ न्यङ्क्वादित्वात्कुत्वम् । नियतमञ्चति—न्यङ्कुर्मृगः॥**फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च**॥१८॥फलेर्गुक्—फल्गुः । पाटेः पटिः—पाटयतीति—पटुः । नम्यतेऽनेन नाकुर्वल्मीकम् । मन्यते इति—मधु । जायते इति जतु॥**वलेर्गुक् च**॥१९॥ (वल संवरणे )—वल्गु॥**शः कित्सन्वच्च**॥२०॥श्यतेरुः स्यात्स च कित्सन्वच्च। शिशुर्बालः ॥**यो द्वे च**॥ २१॥"ययुरश्वोऽश्वमेधीयः"।सन्वदिति मकृते द्वेग्रहणमित्त्वनिवृत्त्यर्थम्॥**कुर्भ्रश्च** ॥२२॥ "बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ"। चादन्यतोऽपि—चक्रुः—कर्ता, जघ्नुर्हन्ता, पपुः–पालकः ॥**पॄभिदिव्यधिगृधिधृषिभ्यः**॥२३॥कुः स्यात् । पुरुः । भिनत्ति भिदुर्वज्रम् । ग्रहिज्येति सम्प्रसारणम् । विरहिणं विध्यति विधुः । "विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे" । गृधुः—कामः । धृषुर्दक्षः॥**कृग्रोरुच्च**॥२४॥करोतीति-कुरुः।गृणातीति—गुरुः॥ **अपदुःसुषु स्थः**॥२५॥(सुषामादिषु च)—इति षत्वम्। अपष्ठु-प्रतिकूलम्।दुष्ठु।सुष्ठु॥**रपेरिच्चोपधायाः** ॥२६॥ अनिष्टं रपतीति-रिपुः॥**अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुग्धुग्दीर्घहकारश्च** ॥२७ ॥ अर्जयति गुणान्—ऋजुः।सर्वानविशेषेण पश्यतीति–पशुः । कन्तुः।अन्धुः—कूपः।"पांशुर्ना न द्वयो रजः"।(तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः)।बाधते इति बाहुः।"बाहुः स्त्रीपुंसयोर्भुजः"॥**प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च**॥२८॥त्रयाणां कुः सम्प्रसारणं, भ्रस्जे सलोपश्च। पृथुः।मृदुः।न्यङ्क्वादित्वात्कुत्वम्-भृज्जति तपसा-भृगुः॥**लङ्घिबंह्योर्नलोपश्च**॥२९॥लघुः॥(वालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते )॥रघुर्नृपभेदः।बहुः॥**ऊर्णोतेर्नुलोपश्च**॥३०॥ऊरुः सक्थि॥**महति ह्रस्वश्च**॥३१॥ उरु महत् ॥ **श्लिषेः कश्च** ॥ ३२ ॥श्लिष्यतीति—श्लिकुर्भृत्यः, उद्यतो

ज्योतिश्च ॥ **आङ्परयोः खनिशृभ्यां डिच्च** ॥३३॥ आखनतीत्याखुः। परं शृणातीति परशुः। पृषोदरादित्वादकारलोपात्पर्शुरपि॥ **हरिमितयोर्द्रुवः** ॥ ३४ ॥ ( द्रु गतौ )। अस्माद् हरिमितयोरुपपदयोः कुः, स च डित् ।हरिभिर्द्रूयते—हरिद्रुर्वृक्षः । मितं द्रवति—मितद्रुः—समुद्रः ॥ **शते च** ॥३५॥ शतधा द्रवति-शतद्रुः। बाहुलकात्केवलादपि । द्रवत्यूर्ध्वमिति—द्रुर्वृक्षः, शाखा च । तद्वान् द्रुमः॥ **खरुशङ्कुपीयुनीलङ्गुलिगु**॥३६॥ पञ्चैते कुमत्ययान्ता निपात्यन्ते । खनते रेफश्चान्तादेशः—खरुः—कामः, क्रूरो, मूर्खः, अश्वश्च । " शङ्कुर्ना कीलशल्ययोः" । पिबतेरीत्त्वं युगागमश्च—पीयुर्वायसः, कालः, सुवर्णं च । निपूर्वाद्—( लगि गतौ )—इत्यस्मात्कुत्वं, नेर्दीर्घश्च—नीलङ्गुः—कृमिविशेषः, सृगालश्च । नीलाङ्गुरिति **पाठान्तरम्**। तत्र धातोरपि दीर्घः । (लगे सङ्गे )—अस्य अत इत्त्वं च—लगतीति-लिगु-चित्तम्, लिगुर्मूर्खः ॥ **मृगय्वादयश्च**॥३७ ॥ एते कुमत्ययान्ताः निपात्यन्ते । मृगं यातीति—मृगयुर्व्याधः, देवयुर्धार्मिकः, मित्रयुर्लोकयात्राभिज्ञः । **आकृतिगणोऽयम्**॥**मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्** ॥ ३८ ॥ मन्दुरा—वाजिशाला । वाशुरा—रात्रिः । मथुरा । चतुरः । चङ्कुरो—रथः । अङ्कुरः। खर्जूरादित्वादङ्कूरोऽपि ॥ **व्यथेः सम्प्रसारणं किच्च** ॥ ३९ ॥ विथुरश्चोररक्षसोः ॥ **मकुरदर्दुरौ** ॥ ४०॥ मकुरो—दर्पणः । बाहुलकान्मुकुरोऽपि । ( दॄ विदारणे )—धातोर्द्विर्वचनमभ्यासस्य रुक् टिलोपश्च—"दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः ॥ दर्दुरा चण्डिकायां स्याद् ग्रामजाले च—दर्दुरम्" इति **विश्वः** ॥ **मद्गुरादयश्च** ॥ ४१ ॥ उरजन्ता निपात्यन्ते । माद्यतेर्गुक्—मद्गुरो-मत्स्यभेदः । ( कबृ वर्णे ) । रुगागमः—" कर्बुरः श्वेतरक्षसोः " । बध्नातेः खर्जूरादित्वादूरोऽपि—बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु " इति **रन्तिदेवः** ॥ **कोकतेर्वा कुक्** ॥ ४२ ॥ कुक्कुरः, कुकुरः ॥ **असेरुरन्** ॥ ४३ ॥ असुरः ॥ प्रज्ञाद्यण्—आसुरः ॥ **मसेश्च** ॥ ४४ ॥ पञ्चमे पादे (मसेरूरन् )—इति वक्ष्यते । "मसूरा मसुरा व्रीहिभेदे पण्ययोषिति ॥ मसूरा मसुरा वा ना वेश्याव्रीहिभेदयोः ॥ मसूरी पापरोगे स्यादुपधाने पुनः पुमान् । मसूरमसुरौ च द्वौ" इति **विश्वः** ॥ **शावशेराप्तौ** ॥ ४५ ॥ शु इति आश्वर्थे । श्वशुरः। "पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः" इत्यमरः ॥ **अविमह्योष्टिषच्** ॥ ४६ ॥ अविषः । महिषः ॥ **अमेर्दीर्घश्च** ॥ ४७ ॥ "आमिषं त्वस्त्रियां मांसे, तथा स्याद्भोग्यवस्तुनि" ॥ **रुहेर्वृद्धिश्च**॥४८॥ "रङ्कुशम्बररौहिषाः" "रौहिषो मृगभेदे स्याद्रौहिषं च तृणं मतम्" इति **संसारावर्तः**॥**तवेर्णिद्वा** ॥४९॥ (तवेति सौत्रो धातुः)। तविषताविषावब्धौ, स्वर्गे च। स्त्रियां तविषी नदी, देवकन्या, भूमिश्च । तविषी बलमिति **वेदभाष्यम्** ॥ **नञि व्यथेः** ॥ ५० ॥ अव्यथिषोऽब्धिसूर्ययोः, अव्यथिषी धरारात्र्योः॥ **किलेर्बुक् च**॥५१॥ किल्बिषम् ॥ **इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहमुचिरुचिरुधिबन्धिशुषिभ्यः किरच्**॥५२॥ इषिरोऽग्निः। मदिरा सुरा। "मुदिरः कामुकाभ्रयोः" इति विश्वमेदिन्यौ । खिदिरश्चन्द्रः। छिदिरोऽसिकुठारयोः । भिदि-

रं—वज्रम् । मन्दिरं—गृहम् । स्त्रियामपि—"मन्दिरं मन्दिरापि स्यात्" इति **विश्वः**।चन्दिरौ चन्द्रहस्तिनौ । तिमिरं तमोऽक्षिरोगश्च।मिहिरः—सूर्यः।मुहिरः—काम्यसभ्ययोः । मुचिरो-दाता । रुचिरम् । रुधिरम् । बधिरः । (शुष शोषणे)—शुषिरं—छिद्रम्।शुष्कमित्यन्ये॥ **अशेर्णित्॥९३॥**आशिरो-वह्निरक्षसोः॥ **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ॥९४॥** अजेर्वीभावाभावः—अजिरमङ्गणम्।शशेरुपधाया इत्वम्—"शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्"।(श्रथ मोचने)—उपधायाः इत्वम् ।रेफलोपः।प्रत्ययरेफस्य लत्वम्—शिथिलम् । स्थास्फायोष्टिलोपः। स्थिरं—निश्चलम् । स्फिरं—प्रभूतम् । तिष्ठते र्वुग्, ह्रस्वत्वं च—स्थविरः, खदिरः । बाहुलकात्—शीङो—बुग्, ह्रस्वत्वं च—शिबिरम् ॥ **सलिकल्यनिमाहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् ॥९५॥** सलति गच्छति निम्नमिति—सलिलम् । कलिलम् । अनिलः । महिला । पृषोदरादित्वान्महेलापि । ( भड इति सौत्रो धातुः ) । भडिलौ—शूरसेवकौ । भण्डिलो—दूतः, कल्याणं च । शण्डिलो—मुनिः । पिण्डिलो—गणकः । तुण्डिलो—मुखरः । कोकिलः । भविलो—भव्यः।बाहुलकात्—कुटिलः॥ **कमेः पश्च॥९६॥**कपिलः॥**गुपादिभ्यः कित् ॥ ९७ ॥** गुपिलो—राजा । तिजिलो—निशाकरः। गुहिलं—वनम्॥ **मिथिलादयश्च॥९८॥**मथ्यन्तेऽत्र रिपवो—मिथिला—नगरी।पथिलः—पथिकः॥ **पतिकठिकुठिगडिगुडिदंशिभ्य एरक्॥ ॥९९॥**पतेरः—पक्षी, गन्ता च।कठेरः—कृच्छ्रजीवी।कुठेरः—पर्णाशः।बाहुलकान्नुम्न । गडेरो-मेघः।गुडेरो-गुडकः । दंशेरो-हिंस्रः॥**कुम्बेर्नलोपश्च॥६०॥**कुबेरः॥ **शदेस्त च॥६१॥** शतेरः-शत्रुः ॥ **मूलेरादयश्च ॥६२॥** एरगन्ता निपात्यन्ते । मूलेरा—जटा । गुधेरो-गोप्ता। गुहेरो—लोहघातकः । मुहेरो—मूर्खः ॥ **कबेरोतच् पश्च ॥६३ ॥** कपोतः-पक्षी ॥ **भातेर्डवतुः॥६४॥** भातीति-भवान्॥**कठिचकिभ्यामोरन् ॥६५॥**कठोरः।चकोरः। **किशोरादयश्च॥६६॥**किंपूर्वस्य शृणातेष्टिलोपः, किमोऽन्त्यलोपश्च।किशोरः-अश्वशावः। सहोरः—साधुः॥**कपिगडिगण्डिकटिपटिभ्य ओलच्॥६७॥**कपीति निर्देशान्नलोपः। कपोलः।गडोलगण्डोलौ-गुडकपर्यायौ।कटोलः-कटुः।पटोलः॥ **मीनातेरूरन् ॥६८॥**मयूरः। **स्यन्देः सम्प्रसारणं च॥६९॥** सिन्दूरम् ॥ **सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्॥ ७०॥**सिनोतीति-सेतुः।तितुत्रेति नेट्—तन्तुः।गन्तुः । मस्तु-दधिमण्डम् । सच्यत इति—सक्तुः। अर्धर्चादिः॥ज्वरत्वरेत्यूठ् । तत्र क्ङितीत्यनुवर्तत इति मते तु—बाहुलकात्—ओतुः—बिडालः।धातुः।क्रोष्टा॥ **पः किच्च॥७१॥**पिबतीति—"पीतुर्वह्नौ दिवाकरे"॥ **अर्तेश्च तुः॥७२॥** अर्तेस्तुः स्यात्स च कित् । "ऋतुः—स्त्रीपुष्पकालयोः"॥ **कमिमनिजनिगाभायाहिभ्यश्च॥७३॥**एभ्यस्तुः स्यात्।"कन्तुः-कन्दर्पचित्तयोः"॥मन्तुरपराधः। जन्तुः—प्राणी । "गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च"।भातुरादित्यः।"यातुरध्वगकालयोः" । रक्षसि क्लीबे । हेतुः—कारणम्।**चायः किः ॥७४॥**"केतुर्ग्रहपताकयोः"॥ **आप्नोतेर्ह्रस्वश्च॥७५॥**अप्तुः—शरीरम्॥**वसेस्तुन्॥७६॥**वस्तु॥**अगारे णिच्च॥७७॥**

"वेश्मभूर्वास्तुरस्त्रियाम्"॥ **कृञः ऋतुः**॥७८॥ऋतुर्यज्ञः ॥ **एधिवह्योश्च तुः**॥७९॥ एधतुः-पुरुषः।वहतुरनड्वान्॥**जीवेरातुः**॥८०॥ "जीवातुरस्त्रियां भक्ते जीविते, जीवनौषधे" ॥ **आतृकन् वृद्धिश्च** ॥८१॥ जीवेरित्येव । "जैवातृकस्त्विन्दुभिषगायुष्मत्सु कृषीवले"॥ **कृषिचमितनिधनिसर्जिखर्जिभ्यः ऊः**॥८२॥"कर्षूः पुंसि करीषाग्नौ- कर्षूर्नद्यां स्त्रियां मतः"।चमूः तनूः धनूः-शस्त्रम्।(सर्ज सर्जने)--सर्जूर्वणिक्।(खर्ज व्यथने)- खर्जूः--पामा ॥ **मृजेर्गुणश्च**॥८३॥मर्जूः-शुद्धिकृत्। **वहो धश्च**॥८४॥"वधूर्जायास्नुषा स्त्रीषु" ॥**कषेश्छश्च** ॥८५॥ कच्छूः-पामा॥**णित्कसिपद्यर्तेः**॥८६ ॥कासूः-शक्तिः। पादूश्चरणधारिणी । आरूः-पिङ्गलः ॥ **अणो डश्च**॥८७॥ आडूर्जलप्लवद्रव्यम् ॥**नञि लम्बेर्नलोपश्च**॥८८॥"तुम्ब्यलाबूरुभे समे" इत्यमरः॥**के श्र एरङ् चास्य** ॥८९॥ कशब्दे उपपदे शृणातेरूः स्यादेरङ् चादेशः ॥ "कशेरूस्तृणकन्दे स्त्री" बाहुलकादुमत्यये कशेरुः-क्लीबे पुंसि च ॥ **त्रो दुट् च** ॥ ९० ॥ तरतेरूः स्यात्तस्य दुट्। "तर्दूः स्याद्दारुहस्तकः"॥**दरिद्रातेर्यालोपश्च**॥९१॥इश्च आश्च यौ तयोर्लोपः।दर्दूः-कुष्ठभेदः ॥ **नृतिशृध्वोः कूः**॥९२॥नृतूर्नर्तकः।शृधूरपानम् ॥ **ऋतेरम् च** ॥ ९३ ॥ऋतिः सौत्रो धातुः । ततः कूरमागमश्च । रन्तूर्देवनदी, सत्यवाक् च ॥**अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः** ॥ ९४ ॥ एते कूप्रत्ययान्ता निपात्यन्ते । अन्दूर्बन्धनम् । (दृभी ग्रन्थे )- निपातनान्नुम्-दृम्भूः ॥ अनुस्वाराभावोपि निपातनादित्येके-दृन्भूः॥ जनेर्बुक्-जम्बूः। (जमु अदने)-इत्यप्येके । बाहुलकाद्ध्रस्वोऽपि-जम्बुः ॥ कफं लाति-कफेलूः-श्लेष्मातकः-निपातनादेत्त्वम्॥कर्कं दधाति कर्कन्धूर्बदरी-निपातनान्नुम् ॥ दिधिं धैर्यं स्यति त्यजतीति-दिधिषूः-पुनर्भूः ॥ **केचित्तु " अन्दूदृम्फूजम्बूकम्बूः "** । इति **पठन्ति** ॥ ( दृम्फ उत्क्लेशे )-दृम्फूः-सर्पजातिः ॥ कमेर्बुक्-कम्बूः-परद्रव्यापहारी ॥ **मृग्रोरुतिः** ॥ ९५ ॥ मरुत् । गरुत्-पक्षः ॥ **ग्रोमुट् च** ॥ ९६ ॥ गिरतेरुतिस्तस्य च मुट् । गर्मुत्-सुवर्णं, तृणविशेषश्च । **हृषेरुलच्**॥९७॥ हर्षुलो-मृगकामिनोः । बाहुलकाच्चटतेः । चटुलं-शोभनम् ॥ **हसिरुहियुषिभ्य इतिः** ॥ ९८ ॥ "हरित्-ककुभि वर्णे च तृणवाजिविशेषयोः" ।सरिन्नदी । रोहित्-मृगविशेषस्य स्त्री । ( युष इति सौत्रो धातुः) । " ऋश्यस्य रोहित् पुरुषस्य योषित्" इति **भाष्यम्। ताडेर्णिलुक् च** ॥९९॥ ताडयतीति-तडित् ॥ **शमेर्ढः**॥१००॥बाहुलकादित्संज्ञा, एयादेशः, इट् च,न। "शण्ढः स्यात्पुंसि गोपतौ" । शण्ढः क्लीबः ॥ **कमेरठः** ॥ १०१ ॥ " कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम् " इति **मेदिनी** । बाहुलकाज्जरठः ॥ **रमेर्वृद्धिश्च** ॥ १०२ ॥ रामठं-हिङ्गु ॥ **शमेः खः** ॥ १०३ ॥ शंखः ॥ **कणेष्ठः** ॥ १०४ ॥ कण्ठः ॥ **कलस्तृपश्च** ॥ १०५ ॥ तृपतेः कलप्रत्ययः, चात्तृफतेः । तृपला-लता । "तृफला तु फलत्रिके"॥**शपेर्वश्च**॥१०६॥शबलः ॥ **वृषादिभ्यश्चित्** ॥१०७॥ वृषलः।पललम् । बाहुलकाद् गुणः-सरलः । तरलः ॥ **कमेर्बुक्**॥१०८॥कम्बलः।(मुस खण्डने)-मुसलम् । **लङ्गेर्वृद्धिश्च**॥१०९॥ लाङ्गलम्॥**कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्** ॥११०॥

कुट्मलः॥कुडेरपि कुडमलः।कश्मलम्।बाहुलकाद्गुणः।कोमलम्॥**मृजेष्टिलोपश्च॥१११॥** मलम्॥**चुपेरच्चोपधायाः॥११२॥**चपलम्॥**शकिशम्योर्नित्॥११३॥** शकलम् ॥ शमलम् ॥ **छो गुग्घ्रस्वश्च ॥ ११४ ॥** छगलः । मज्ञादित्वाच्छागलः॥ **अमन्ताड्डः ।११५॥** दण्डः । रण्डा । खण्डः । मण्डः । वण्डश्छिन्नहस्तः । अण्डः । बाहुलकात्सत्वाभावः—षण्डः—सङ्घातः । तालव्यादिरित्यपरे—शण्डः । गण्डः ।चण्डः।पण्डः।क्लीबः। पण्डा—बुद्धिः॥**क्वादिभ्यः कित्॥११६॥**कवर्गादिभ्यो डः कित्स्यात्।कुण्डम्।काण्डम्। गुङ्—गुडः।(घुण भ्रमणे)घुण्डो—भ्रमरः॥**स्थाचतिमृजेरालज्वालञालीयचः॥११७॥** तिष्ठतेरालच्—स्थालम्, स्थाली । चतेर्वालञ्—चात्वालः । मृजेरालीयच्—मार्जालीयो—बिडालः ॥ **पतिचण्डिभ्यामालञ् ॥ ११८ ॥** पातालम् । चण्डालः । मज्ञादित्वादणि चाण्डालोऽपीत्येके । **तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन्॥११९॥**तमालः।विशालः।विडालः । मृणालम् । कुशलः । कपालम् । पलालम् । पञ्चालाः॥**पतेरङ्गच् पक्षिणि॥१२०॥**पतङ्गः॥**तरत्यादिभ्यश्च॥१२१॥**तरङ्गः।लवङ्गम्॥**विडादिभ्यः कित्॥१२२॥**विडङ्गम्।मृदङ्गः।कुरङ्गः—बाहुलकादुत्वं च॥**सृवृञो वृद्धिश्च॥१२३॥**सारङ्गः।वारङ्गः—खड्गादिमुष्टिः ॥ **गन् गम्यद्योः॥१२४॥**गङ्गा।अद्गः-पुरोडाशः॥**छापूखडिभ्यः कित्॥१२५॥**छागः।पूगः।खड्गः।बाहुलकात्—(षिट अनादरे) गन्सत्त्वाभावश्च—षिङ्गः—तरलः।"षिङ्गैरगद्यत ससंभ्रममेवमेके" इति माघः॥ **भृञः किन्नुट् च ॥ १२६ ॥** भृञो गन् कित्स्यात्तस्य नुट् च । "भृङ्गाः—षिड्गालिधूम्याटाः"॥ **शृणातेर्ह्रस्वश्च ॥ १२७ ॥** शृङ्गम् ॥ **गण् शकुनौ ॥ १२८ ॥** नुट् चेत्यनुवर्तते शार्ङ्गः ॥ **मुदिग्रोर्गग्गौ ॥ १२९ ॥** मुद्गः ॥ गर्गः ॥ **अण्डन् कृसृभृवृञः ॥१३०॥** करण्डः । सरण्डः—पक्षी । भरण्डः—स्वामी । वरण्डो—मुखरोगः ॥ **शृदृभसोऽदिः ॥ १३१ ॥** शरत् । " दरद्धृदयकूलयोः " । भसज्जघनम् ॥ **दृणातेः षुग्घ्रस्वश्च ॥ १३२ ॥** दृषत् ॥ **त्यजितनियमिभ्यो डित् ॥ १३३ ॥** त्यद्, तद्, यद्, सर्वादयः ॥ **एतेस्तुट् च ॥ १३४ ॥** एतद् ॥ **सर्तेरटिः ॥ १३५ ॥** " सरट् स्याद्वातमेघयोः" । **वेदभाष्ये तु** "याभिः कृशानुम् " इति मन्त्रे सरड्भ्यो मधुमक्षिकाभ्य इति व्याख्यातम् । **लङ्घेर्नलोपश्च ॥ १३६ ॥** लघट्—वायुः ॥ **पारयतेरजिः ॥ १३७ ॥** पारक् सुवर्णम् ॥ **प्रथेः कित्सम्प्रसारणं च ॥ १३८ ॥** पृथक्—स्वरादिपाठादव्ययत्वम् ॥ **भियः षुग्घ्रस्वश्च ॥ १३९ ॥** भिषक् ॥ **युष्यसिभ्यां मदिक् ॥ १४० ॥** ( युष् सौत्रो धातुः ) युष्मद् । अस्मद् ॥त्वम्। अहम्॥ **अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ॥ १४१ ॥** एभ्यश्चतुर्दशभ्यो मन् । अर्मश्चक्षूरोगः । स्तोमः । सङ्घातः । सोमः । होमः । सर्मो—गमनम् । धर्मः । क्षेमं—कुशलम् । क्षोमम्, मज्ञादाणि क्षौमं च । भामः—आदित्यः । यामः। "वामः शोभनदुष्टयोः" । पद्मम् । ( यक्ष पूजायाम् )—यक्ष्मो—रोगराजः । नेमः ॥ **जहातेः सन्वदालोपश्च ॥ १४२ ॥** "जिह्मः कुटिलमन्दयोः" ॥ **अवतेष्टिलोपश्च॥१४३॥**

१-अत्रादिशब्दस्सादृश्यार्थकः । २ विडेरभावाद्विटेष्टस्य बाहुलकाड्डत्वं कल्प्यम्। विडधातुर्वाकृतिगणावदूह्यः ।

मन्मत्ययस्यायं टिलोपो,न मक्कृतेः । अन्यथा डिदित्येव ब्रूयात् । ज्वरत्वरेति ऊठौ ।तयो-र्दीर्घे कृते गुणः । चादिपाठादव्ययत्वमित्युज्ज्वलदत्तः ॥ **तन्न** ॥ तेषामसत्त्वार्थत्वात् ॥ **वस्तुतस्तु** स्वरादिपाठादव्ययत्वम् । अवतीति—ओम् ॥ **ग्रसेरा च** ॥१४४॥ ग्रामः **अविसिविसिशुषिभ्यः कित्** ॥ १४५ ॥ ऊमं—नगरम् । स्यूमो—रश्मिः।सिमः—सर्वः । "शुष्ममग्निसमीपयोः" । **इषियुधीन्धिदसिश्याधूसूभ्यो मक्** ॥१४६॥ "इष्मः कामवसन्तयोः" । **ईषीति पाठे** दीर्घादिः । युध्मः—शरो, योद्धा च । इध्मः—समिद् । दस्मो—यजमानः । श्यामः । धूमः । सूमोऽन्तरिक्षम् ॥ बाहुलकादीर्मं व्रणः ॥ **युजिरुचितिजां कुश्च**॥१४७॥युग्मम् । रुक्मम् । तिग्मम् । **हन्तेर्हि च** ॥१४८॥ हिमम् ॥ **भियः षुग् वा** ॥ १४९ ॥ भीमः, भीष्मः ॥ **घर्मः** ॥ १५० ॥ घृधातो-र्मग्गुणश्च निपात्यते॥ **ग्रीष्मः** ॥ १५१ ॥ ग्रसतेर्निपातोऽयम् ॥ **प्रथेः षिवन् सम्प्र-सारणं च** ॥१५२॥ पृथिवी।षवन्नित्येके।"पृथवी पृथिवी पृथ्वी" इति **शब्दार्णवः**॥ **अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्** ॥ १५३ ॥ अश्वः । ( प्रुष स्नेहनादौ ) "प्रुष्वः स्यादृतुसूर्ययोः",प्रुष्वा—जलकणिका । लट्वा—पक्षिभेदः, फलं च । कण्वं—पापम् । बाहुलकादित्वे **किण्वमपि** । खट्वा । विश्वम् ॥ **इण्शीभ्यां वन्** ॥ १५४ ॥ एवः गन्ता । "ये व एवा मरुतः" । असत्त्वे निपातोऽयम् । "शेवं मित्राय वरुणाय" ॥**सर्वनिघृ-ष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अतन्त्रे** ॥ १५५॥ अकर्तर्येते निपात्यन्ते । सृतम-नेन विश्वमिति सर्वम् । निपूर्वाद् घृषेर्गुणाभावोऽपि । निघृष्यतेऽनेन--निघृष्वः—खुरः। रिष्वः—हिंस्रः । लष्वः—नर्तकः, **लिष्वः इत्यन्ये**—तत्रोपधाया इत्त्वमपि । शेतेऽस्मिन् सर्वमिति—शिवः—शम्भुः—शीङो ह्रस्वत्वम् । पट्वः—रथो, भूलोकश्च । प्रह्वयते इति—प्रह्वः। ह्वेञ आकारवकारलोपः, जहातेराङ्लोपो वा ॥ ईषेर्वन्—ईष्व—आचार्यः ।**इष्व इत्यन्ये**। अतन्त्रे किम् । सर्ता, सारकः । बाहुलकाद् ह्रसतेः **ह्रस्वः** ।**शेवयह्वजिह्वाग्रीवाप्वा मीवाः** ॥ १५६ ॥ शेव इत्यन्तोदात्तार्थम् । यान्त्यनेन यह्वः—ह्रस्वो, हुगागमश्च । लिह-न्त्यनया—जिह्वा—लकारस्य जो, गुणाभावश्च । गिरन्त्यनया—ग्रीवा--ईडागमश्च । आप्नो-तीत्याप्वा--वायुः । मीवा--उदरकृमिः । **वायुरित्यन्ये** ॥ **कृगृशृदृभ्यो वः**॥१५७॥ कर्वः--कामः, आखुश्च । गर्वः । शर्वः । दर्वः--राक्षसः ॥ **कनिन् युवृषितक्षिराजि धन्विद्युप्रतिदिवः** ॥ १५८॥ यौतीति--युवा । वृषा । तक्षा । राजा । धन्वा—मरुः,। धन्व, शरासनम् । द्युवा--सूर्यः । प्रतिदीव्यन्त्यस्मिन् प्रतिदिवा--दिवसः॥ **सप्यशूभ्यां तुट् च** ॥ १५९ ॥ सप्त । अष्ट ॥ **नञि जहातेः** ॥ १६० ॥ अहः ॥ **श्वन्नुक्षन्पू-षन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति** ॥ १६१ ॥ एते त्रयोदश कनिन्प्रत्ययान्ता निपात्यन्ते । श्वयतीति--श्वा । उक्षा । पूषा । ( प्लिह गतौ ) इकारस्य दीर्घत्वम् । प्लेहते इति--प्लीहा--कुक्षिव्याधिः । ( क्लिदू आर्द्रीभावे )—क्लिद्यति--क्लेदा—चन्द्रः । स्निह्यतेर्गुणः । स्निह्यतीति स्नेहा--सुहृच्चन्द्रश्च । मुह्यन्त्यस्मिन्नाहते मूर्धा—मुहेरुपधाया दीर्घः धोऽन्तादेशो, रमागमश्च । मज्जत्यस्थिषु-मज्जा,--अस्थिसारः । अर्यपूर्वो माङ्--अर्यमा । विश्वं प्सातीति—विश्वप्सा--अग्निः। परिजा-यते—परिज्मा—चन्द्रोऽग्निश्च—जनेरुपधालोपो मश्चान्तादेशः । मातरि अन्तरिक्षे—श्वयतीति—

मातरिश्वा—धातोरिकारलोपः । ( मह पूजायाम् ) हस्य घो बुगागमश्च । मघवा-इन्द्रः ॥

**इत्युणादिषु प्रथमः पादः ॥ १ ॥**

**कृहृभ्यामेणुः** ॥ १ ॥ करेणुः । हरेणुर्गन्धद्रव्यम् ॥ **हनिकुषिनीरमिकाशिभ्यः क्थन्** ॥ २ ॥ हथो—विषण्णः । कुष्ठः । नीथो—नेता । रथः । काष्ठम् ॥ **अवे भृञः** ॥ ३ ॥ अवभृथः ॥ **उषिकुषिगार्तिभ्यस्थन्** ॥ ४ ॥ ओष्ठः । कोष्ठम् । गाथा । अर्थः । बाहुलकात्—शोथः ॥ **सर्तेर्णित्** ॥ ५ ॥ सार्थः—समूहः ॥ **जॄवृञ्भ्यामूथन्** ॥ ६ ॥ जरूथं—मांसम् । "वरूथोः-रथगुप्तौ ना" ॥ **पातॄतुदिवचिरिचिसिचिभ्यस्थक्** ॥ ७ ॥ "पीथो रविर्घृतं पीथम्" "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु ॥ अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम्" इति **विश्वः** । तुत्थोऽग्निः । उक्थं—सामभेदः । रिक्थम् । बाहुलकाद्दचेरपि—"रिक्थमृक्थं धनं वसु" । सिक्थम् ॥ **अर्तेर्निरि** ॥ ८ ॥ निर्ऋथः—साम ॥ **निशीथगोपीथावगथाः** ॥ ९ ॥ निशीथोऽर्धरात्रः, रात्रिमात्रं च । गोपीथं—तीर्थम् । अवगथः—प्रातःस्नातः ॥ **गश्चोदि** ॥ १० ॥ उद्गीथः—साम्नो भागविशेषः ॥ **समीणः** ॥ ११ ॥ समिथो—वह्निः, संग्रामश्च ॥ **तिथपृष्ठगूथयूथप्रोथाः** ॥ १२ ॥ तिजेर्जलोपः—तिथोऽनलः, कामश्च । पृष्ठम् । गूथं-विष्ठा । यूथं—समूहः । "प्रोथमस्त्री तुरङ्गास्ये प्रोथः प्रस्थित उच्यते" ॥ **स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्** ॥ १३ ॥ द्वात्रिंशद्भ्यो रक् स्यात् । वलि यलोपः—स्फारम् । न्यङ्क्वादित्वात्कुत्वम्—तक्रम्, वक्रम् । शक्रः । क्षिप्रम् । क्षुद्रः । सृप्रश्चन्द्रः । तृप्रः—पुरोडाशः । दृप्रः—बलवान् । वन्द्रः—पूजकः । उन्दी—उन्द्रः—जलचरः । श्वित्रं—कुष्ठम् । "वृत्रो—रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे" । अजेर्वी—वीरः । नीरम् । पद्रो—ग्रामः । मद्रो—हर्षो, देशभेदश्च । मुद्रा—प्रत्ययकारिणी । खिद्रः—रोगो, दरिद्रश्च । छिद्रम् । भिद्रं—वज्रम् । मन्द्रः । चन्द्रः । पचाद्यचि—चन्दोऽपि । "हिमांशुश्चन्द्रमाश्चन्द्रः" । "शशी चन्दो हिमद्युतिः" । दह्रोऽग्निः । दस्रः—स्वर्वैद्यः । दभ्रः—समुद्रः, स्वल्पश्च ॥ वसेः सम्प्रसारणे ॥ **न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्** । ८ । ३ । ११० ॥ रेफपरस्य सकारस्य सृप्यादीनां सवनादीनां च मूर्धन्यो न स्यात् । पूर्वपदादिति प्राप्तः प्रतिषिध्यत इति **वृत्तिर्भूयोभिप्राया** । तेन शासिवसीति प्राप्तमपि न—उस्रः-रश्मिः, उस्रा—गौः । वास्रः-दिवसः, वास्रं-मन्दिरम् । शीरोऽजगरः । हस्रो—मूर्खः । सिध्रः साधुः । शुभ्रम् ॥ **सुसेरक्** ॥ १४ ॥ सुस्रम् । बाहुलकाद्—अश्रु ॥ **चकिरम्योरुच्चोपधायाः** ॥ १५ ॥ चुक्रमम्लद्रव्यम् । रुम्रोऽरुणः ॥ **वौ कसेः** ॥ १६ ॥ विकुस्रश्चन्द्रः ॥ **अमितम्योर्दीर्घश्च** ॥ १७ ॥ आम्रम् । ताम्रम् ॥ **निन्देर्नलोपश्च** ॥ १८ ॥ निद्रा ॥ **अर्देर्दीर्घश्च** ॥ १९ ॥ आर्द्रम् ॥ **शुचेर्दश्च** ॥ २० ॥ शूद्रः ॥ **दुरीणो लोपश्च** ॥ २१ ॥ दुःखेन ईयते प्राप्यत इति दूरम् ॥ **कृतेश्छः, क्रू च** ॥ २२ ॥ कृच्छ्रम् । क्रूरः ॥ **रोदेर्णिलुक् च** ॥ २३ ॥ रोदयतीति-रुद्रः ॥ **बहुलमन्यत्रापि संज्ञाछन्दसोः** ॥ २४ ॥ णिलुगित्येव । "वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे ॥ ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति" ॥ **जोरी च** ॥ २५ ॥ जीरोऽणुः । न्यश्चेत्येके ॥ **सुसूधागृधिभ्यः क्रन्** ॥ २६ ॥ सुरः । सूरः । धीरः । गृध्रः ॥

**शुसिचिमीनां दीर्घश्च** । २७ ॥ ( शु: सौत्रः )--शूरः । सीरम् । चीरम् । मीरः-समुद्रः ॥ **वाविन्धेः** ॥२८ ॥ वीध्रं--विमलम् ॥**वृधिवपिभ्यां रन्** ॥२९॥ वर्ध्रं-चर्म। वप्रः-प्राकारः ॥ **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवत्रेरामालाः** ॥३०॥ रन्नन्ता ऊनविंशतिः।निपातनाद् गुणाभावः--ऋज्रो-नायकः। इदि--इन्द्रः । अङ्गेर्नलोपः--अग्रम् । "वज्रोऽस्त्री हीरके पवौ" । डुवप्--उपधाया इत्त्वम्-विप्रः । कुम्बिचुम्ब्योर्नलोपश्च--कुब्रमरण्यम्, चुब्रं-मुखम् । ( क्षुर विलेखन )--रेफलोपः । अगुणः--क्षुरः । ( खुर छेदने ) रलोपो, गुणाभावश्च--खुरः । भन्देर्नलोपः--भद्रम् । ( उच समवाये )--चस्य गः । उग्रः । ञिभी--भेरी । पक्षे लः--भेलो--जलतरणद्रव्यम् । शुचेश्चस्य कः--शुक्रः । पक्षे लः--शुक्लः । गुङ्--वृद्धिः- "गौरोऽरुणे सिते पीते" । ( वन संभक्तौ )--वत्रो--विभागी । इणो गुणाभावः--"इरा मद्ये च वारिणि" । ( मा माने )-माला ॥ **समि कस उकन्** ॥ ३१ ॥ ( कस गतौ ) सम्यक्कसान्ति पलायन्ते जनाः अस्मादिति--संकसुको-दुर्जनः, अस्थिरश्च ॥ **पचिनशोर्णुकन्, कनुमौ च** ॥ ३२ ॥ पचेः कः-- पाकुकः--सूपकारः । नशेर्नुम्--नंशुकः ॥ **भियः क्रुकन्** ॥ ३३॥भीरुकः॥ **कुञ्छिलिपसंज्ञयोरपूर्वस्यापि**॥३४॥रजकः । इक्षुकुट्टकः। चरकः । ( चष भक्षणे ) चषकः, शुनकः, भषकः ॥ **रमे रश्च लो वा** ॥ ३५ ॥ रमको--विलासी । लमकः ॥ **जहातेर्द्वे च** ॥ ३६ ॥ जहकस्त्यागी, कालश्च ॥ **ध्मो धम च** ॥ ३७ ॥ धमकः-कर्मकारः ॥ **हनो वध च** ॥ ३८ ॥ वधकः । बहुलमन्यत्रापि--( कुह विस्मापने )-कुहकः। कृतकम् ॥ **कृषेर्वृद्धिश्चोदीचाम्** ॥ ३९ ॥ कार्षकः, कृषकः ॥ **उदकं च** ॥४०॥प्रपश्चार्थम् ॥ **वृश्चिकृष्योः किकन्** ॥४१॥ वृश्चिकः । कृषिकः॥**प्राङि पणिकषः** ॥ ४२ ॥ प्रापणिकः--पण्यविक्रयी । प्राकषिकः--परदारोपजीवी ॥ **मुषेर्दीर्घश्च** ॥ ४३ ॥ मूषिकः--आखुः ॥ **स्यमेः संप्रसारणं च** ॥ ४४ ॥ चाद्दीर्घः । सीमिकः--वृक्षभेदः ॥ **क्रिय इकन्** ॥ ४५ ॥ क्रयिकः--क्रेता ॥ **आङि पणिपनिपतिखनिभ्यः** ॥ ४६ ॥ आपणिकः । आपनिकः--इन्द्रनीलः, किरातश्च । आपतिकः--श्येनः, दैवायत्तश्च । आखनिकः--मूषिको, वराहश्च ॥ **श्यास्त्याहृञविभ्य इनच्** ॥ ४७॥ श्येनः । स्त्येनः । हरिणः । अविनोऽध्वर्युः ॥ **वृजेः किच्च** ॥ ४८ ॥ वृजिनम् ॥ **अजेरज च** ॥४९॥ वीभावबाधनार्थम्--अजिनम् ॥ **बहुलमन्यत्रापि** ॥ ५०॥ कठिनम्। नलिनम् । मलिनम्।कुण्डिनम्।यतेः--"यतपरुषि दिनम्"दिवसोपि--दिनम्॥**द्रुदक्षिभ्यामिनन्** ॥५१॥द्रविणम्। दक्षिणः, दक्षिणा॥**अर्तेः किदिच्च**॥५२॥इरिणं--शून्यम्॥**विपितुह्योर्ह्रस्वश्च** ॥५३॥ विपिनम् । तुहिनम् ॥ **तलिपुलिभ्यां च** ॥५४॥ "तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु"।पुलिनम्॥**गर्वेरत उच्च**॥५५॥गौरादित्वान्ङीष्--गुर्विणी-गर्भिणी ॥**रुहेश्च** ॥ ५६ ॥ रोहिणः॥**महेरिनण् च** ॥ ५७ ॥ चादिनन् । माहिनम्, महिनं,--राज्यम् ॥ **क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं च** ॥५८॥वाक् । प्राट् । श्रीः । स्रवत्यतो घृतादिकमिति--स्रूः यज्ञोपकरणम् । द्रूर्हिरण्यम् । कटप्रूः--कामरूपी, कीटश्च । "जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम्" ॥

**आप्नोतेर्ह्रस्वश्च ॥ ५९॥** आपः—अपः—अद्भिः—अद्भ्यः॥ **परौ व्रजेष्षः पदान्ते ॥ ॥ ६० ॥** व्रजेः—क्विब्दीर्घौ स्तः, पदान्ते तु षश्च । परिव्राट्, परिव्राजौ ॥ **हुवः श्लुवच्च ॥ ६१ ॥** जुहूः ॥ **स्रुवः कः ॥ ६२ ॥** स्रुवः ॥ **चिक्च ॥ ६३ ॥** इकार उच्चारणार्थः । क इत्कुत्वम् स्रुक्, "स्रुवं च स्रुचश्च संमृड्ढि" **तनोतेरनश्च वः॥६४॥** तनोतेश्चिक् प्रत्ययः, अनो वशब्दादेशश्च । त्वक् ॥ **ग्लानुदिभ्यां डौः॥६५॥** ग्लौः । नौः ॥ **च्विरव्ययम् ॥ ६६ ॥** डौरित्येव । ग्लौकरोति । कृन्मेजन्त इति सिद्धे नियमार्थमिदम् । उणादिप्रत्ययान्तश्च्व्यन्त एवेति ॥ **रातेर्डैः॥६७॥** राः—रायौ—रायः ॥ **गमेर्डोः ॥६८॥** "गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु" । बाहुलकाद्—द्युतेरपि डोः—द्यौः स्त्री स्वर्गान्तरिक्षयोः" ॥ **भ्रमेश्च डूः ॥ ६९ ॥** भ्रूः । चाद्गमेः—अग्रेगूः ॥ **दमेर्डोसिः॥७०॥** दोः—दोषौ॥ **पणेरिज्यादेश्च वः॥७१॥** वणिक् । स्वार्थेऽण्—"नैगमो वाणिजो वणिक्"॥ **वशेः कित् ॥ ७२ ॥** "उशिगग्नौ घृतेऽपि च" ॥ **भृञ ऊच्च ॥७३॥** भूरिक्—भूमिः ॥ **जसिसहोरुरिन् ॥ ७४ ॥** जसुरिर्वज्रम् । सहुरिरादित्यः, पृथिवी च ॥ **सुयुरुवृञो युच् ॥ ७५ ॥** सवनः—चन्द्रमाः । यवनः । रवणः—कोकिलः । वरणः ॥ **अशे रशच ॥ ॥७६॥** अश्नोतेर्युच् स्यात्, रशादेशश्च । रशना—काञ्ची । जिह्वावाची तु—दन्त्यसकारवान्॥ **उन्देर्नलोपश्च॥७७॥** ओदनः॥ **गमेर्गश्च ॥७८॥** गमेर्युच् स्याद्गश्चादेशः। गगनम् ॥ **बहुलमन्यत्रापि ॥ ७९ ॥** युच् स्यात्—स्यन्दनः, रोचना ॥ **रञ्जेः क्युन् ॥ ८० ॥** रजनम् ॥ **भूसूधूभ्रस्जिभ्यश्छन्दसि॥८१॥** भुवनम् । सुवनः आदित्यः । धुवनः—वह्निः। निधुवनं—सुरतम् । भृज्जनम्—अम्बरीषम् । **कृपॄवृजिमन्दिनिधाञः क्युः ॥ ८२ ॥** किरणः । पुरणः—समुद्रः । वृजनम्—अन्तरिक्षम् । मन्दनं—स्तोत्रम् । निधनम् ॥ **धृषेर्धिषच् संज्ञायाम् ॥ ८३ ॥** धिषणः—गुरुः, धिषणा—धीः ॥ **वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्च ॥८४॥** अतिप्रत्ययान्ता निपात्यन्ते । (पृषु सेचने)—गुणाभावः—पृषन्ति । महान् । बृहत् । गमेर्जगादेशः—जगत् ॥ **संश्चत्तृपद्वेहत्॥८५॥** एते निपात्यन्ते । पृथक्करणं शतृवद्भावनिवृत्त्यर्थम् । संचिनोतेः, सुट् । इकारलोपः—संश्चत्—कुहकः । तृपत्—छत्रम्। विपूर्वाद्धन्तेष्टिलोपः, इत ए च—वेहत्—गर्भोपघातिनी ॥ **छन्दस्यसानच्छुजृभ्याम्॥ ॥ ८६ ॥** शवसानः—पन्थाः । जरसानः—पुरुषः ॥ **ऋञ्जिवृधिमन्दिसहिभ्यः कित् ॥८७॥** ऋञ्जसानः—मेघः । वृधसानः—पुरुषः । मन्दसानः—अग्निर्जीवश्च । साहसानः—यज्ञो, मयूरश्च ॥ **अर्तेर्गुणः शुट् च ॥८८॥** अर्शसानः—अग्निः ॥ **सम्यानच् स्तुवः ॥ ॥ ८९ ॥** संस्तवानः—वाग्मी ॥ **युधिबुधिदृशिभ्यः किच्च ॥ ९० ॥** युधानः । बुधानः । दृशानः—लोकपालकः ॥ **हुर्च्छेः सनो लुक् छलोपश्च ॥ ९१ ॥** जुहुराणः—चन्द्रमाः ॥ **श्वितेर्दश्च ॥ ९२ ॥** शिश्विदानः—पुण्यकर्मा ॥ **तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ॥ ९३ ॥** शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः, तौ

१ डो प्रत्ययान्तश्च्व्यन्त अव्ययसंज्ञो भवतीति तदर्थः ।

चानिटौ। शंस्ता--स्तोता, शंस्तरौ--शंस्तरः। ( क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च )-**अनुदात्तेत्**--" वृक्ये चक्षदानम् " इति मन्त्रात्, " उक्षाणं वा वेहतं वा क्षदन्ते " इति ब्राह्मणाच्च। "क्षत्ता स्यात्सारथौ द्वास्थे वैश्यायामपि शूद्रजे"॥**बहुलमन्यत्रापि** ॥९४॥मन्--मन्ता, हन्--हन्ता, इत्यादि ॥**नप्तृ नेष्टृ त्वष्टृ होतृ पोतृ भ्रातृ जामातृ मातृ पितृ दुहितृ** ॥ ९५ ॥ न पतन्त्यनेन नप्ता--पौत्रो, दौहित्रश्च। नयतेः षुग्गुणश्च--नेष्टा। त्विषेरितोऽत्त्वम्--त्वष्टा। होता। पोता--ऋत्विग्भेदः। भ्राजतेर्जलोपः--भ्राता। जायां माति--जामाता। ( मान पूजायाम् )--नलोपः--माता। पातेराकारस्य इत्त्वम्--पिता। दुहेस्तृच्, इट्, गुणाभावश्च--दुहिता ॥ **सुञ्यसेर्ऋन्**॥९६॥स्वसा॥**यतेर्वृद्धिश्च** ॥९७॥ याता, " भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् " ॥ **नञि च नन्देः** ॥ ९८॥ न नन्दति--ननान्दा। इह वृद्धिर्नानुवर्त्तेत इत्येके--" ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सा " इति **शब्दार्णवः**॥**दिवेर्ऋः**॥९९॥देवा, देवरः, "स्वामिनौ देवृदेवरौ"॥ **नयतेर्डिच्च** ॥ ना--नरौ--नरः ॥ **सव्ये स्थश्छन्दसि** ॥ १०० ॥ अम्बाम्बेत्यत्र-**( स्थास्थिन्स्थूणामुपसंख्यानम् )** ॥ सव्येष्ठा--सारथिः, सव्येष्ठरौ--सव्येष्ठरः ॥ **अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः**॥१०१॥ अष्टभ्योऽनिप्रत्ययः स्यात्। अरणिः--अग्नेर्योनिः। सरणिः। धरणिः। धमनिः। अमनिर्गतिः। अशनिः। अवनिः। तरणिः। बाहुलकात्--रजनिः॥**आङि शुषेः सनश्छन्दसि**॥१०२॥आशुशुक्षणिः--अग्निर्वातश्च॥ **कृषेरादेश्च चः**॥१०३॥चर्षणिः--जनः ॥ **अदेर्मुट् च**॥१०४॥अद्मनिः--अग्निः॥**वृतेश्च** ॥ १०५ ॥ वर्तनिः। **गोवर्धनस्तु--चकारान्मुट्--वर्त्मनिरित्याह** ॥ **क्षिपेः किच्च** ॥ १०६ ॥ क्षिपणिः--आयुधम् ॥ **अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः** ॥ १०७ ॥ अर्चिर्ज्वाला। इदन्तोऽप्ययम्--" अग्नेर्भ्राजन्ते अर्चयः "। शोचिः--दीप्तिः। हविः सर्पिः। इस्मन्निति ह्रस्वः--छदिः--पटलम्। छर्दिः--वमनव्याधिः।इदन्तोऽपि--" छर्द्यतीसारशूलवान् " ॥ **बृंहेर्नलोपश्च** ॥ १०८ ॥ " बर्हिर्ना कुशशुष्मणोः" ॥ **द्युतेरिसिन्नादेश्च जः** ॥ १०९ ॥ ज्योतिः ॥ **वसौ रुचेः संज्ञायाम्** ॥११०॥ वसुरोचिः--यज्ञः ॥ **भुवः कित्**॥१११॥भुविः--समुद्रः ॥ **सहो धश्च**॥११२॥सधिः--अनड्वान्॥**पिबतेस्थुक्**॥११३॥"पाथिश्चक्षुःसमुद्रयोः"। **जनेरुसिः**॥११४॥जनुः--जननम्॥**मनेर्धश्छन्दसि**॥११५॥मधुः॥**अर्तिपृवपियजितनिधनितपिभ्यो नित्**॥ ११६ ॥ अरुः। परुः--ग्रन्थिः। वपुः। यजुः। तनुः--तनुषी--तनूंषि। धनुरस्त्रियाम्, "धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति"।सान्तस्य, उदन्तस्य वा रूपम्॥ "तपुः सूर्याग्निशत्रुषु"॥ **एतेर्णिच्च**॥११७॥आयुः--आयुषी॥**चक्षेः शिच्च**॥११८॥शित्त्वात्सार्वधातुकत्वेन ख्याञ्बाधः।चक्षुः॥**मुहेः किच्च**॥११९॥मुहुः--अव्ययम्॥**बहुलमन्यत्रापि** ॥ आचक्षुः। परिचक्षुः॥**कॄगॄशॄवृञ्चतिभ्यः ष्वरच्**॥१२०॥कर्वरः--व्याघ्ररक्षसोः। गर्वरः--अहंकारी। शर्वरी--रात्रिः। वर्वरः--प्राकृतो जनः। चत्वरम् ॥ **नौ सदेः**॥१२१॥" निषद्वरस्तु जम्बालः "॥ निषद्वरी--रात्रिः ॥ ॥ **इत्युणादिषु द्वितीयः पादः** ॥ २॥

१ सावसेरिति क्वचित्पाठः।

**छित्वरछत्वरधीवरपीवरमीवरचीवरनीवरगह्वरकट्वरसंयद्वराः ॥ १ ॥** एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते ॥ छिदिर्, छद्, अनयोस्तकारोऽन्तादेशः, छिदेर्गुणाभावश्च—छित्वरो—धूर्तः।"छत्वरो गृहकुञ्जयोः"।धीवरः—कैवर्तः। पीवरः—स्थूलः। मीवरः—हिंसकः। चिनोतेर्दीर्घश्च—चीवरं—भिक्षुकमावरणम्।तीवरो—जातिविशेषः। नीवरः—परिव्राट्। गाहतेर्ह्रस्वत्वम्- गह्वरम्। (कटे वर्षादौ )—कट्वरं—व्यजनम्। यमेर्दकारः—संयद्वरः—नृपः। पदेः—सम्पद्वर इत्येके॥**इण्सिञ्जिदीङुष्यविभ्यो नक् ॥२॥**"इनः सूर्ये नृपे पत्यौ"। सिनः—काणः। जिनः—अर्हन्। दीनः। उष्णः। ऊनः॥**फेनमीनौ॥३॥** एतौ निपात्येते। स्फायतेः—फेनः। मीनः॥ **कृषेर्वर्णे ॥ ४ ॥** कृष्णः॥ **बन्धेर्ब्रधिबुधी च ॥ ५॥** ब्रध्नः। बुध्नः॥**धापॄवस्यज्यतिभ्यो नः॥६॥**"धाना भ्रष्टयवे स्त्रियाम्"। पर्णं—पत्रम्, पर्णः—किंशुकः।"वस्नो मूल्ये वेतने च"।अजेर्वी—वेनः। अत्नः—आदित्यः। बाहुलकात्—शृणोतेः—**श्रोणः**—पङ्गुः॥ **लक्षेरट् च ॥ ७ ॥** लक्षेश्चुरादिण्यन्तान्नः स्यात्, तस्याऽडागमश्च।चान्मुडित्येके।लक्षणं,—"लक्ष्मणं नाम्नि चिह्ने च"।लक्षणो लक्ष्मणश्च रामभ्राता। "लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा"॥ **वनेरिच्चोपधायाः ॥८॥**वेन्ना—नदी॥ **सिवेष्टेर्यू च ॥ ९ ॥** दीर्घोच्चारणसामर्थ्यान्न गुणः। स्यूनः—आदित्यः।बाहुलकात् केवलो नः। ऊठ्। अन्तरङ्गत्वाद्यण्। गुणः—**स्योनः** ॥ **कृवृजॄसिद्रुपन्यनिस्वपिभ्यो नित् ॥१०॥** कर्णः। वर्णः। "जर्णश्चन्द्रे च वृद्धे च"।सेना। द्रोणः। पन्नः—नीचैर्गतिः। अन्नमोदनः। स्वप्नो—निद्रा॥ **धेट इच्च ॥११॥**"धेनः सिन्धुर्नदी धेना"॥**तृषिशुषिरसिभ्यः कित् ॥१२॥** तृष्णा। शुष्णः—सूर्यो, वह्निश्च। रस्नं—द्रव्यम्॥ **सुञो दीर्घश्च ॥१३॥** सूना—वधस्थानम्॥**रमेस्त च ॥१४॥** रमयतीति—रत्नम्॥ **रास्नासास्नास्थूणावीणाः ॥ १५ ॥** रास्ना—गन्धद्रव्यम्। सास्ना—गोगलकम्बलः। स्थूणा गृहस्तम्भः।वीणा—वल्लकी॥**गादाभ्यामिष्णुच् ॥१६॥** गेष्णुर्गायनः। देष्णुर्दाता॥ **कृत्यशूभ्यां क्स्नः ॥ १७ ॥** कृत्स्नम्। अक्ष्णमखण्डम्॥ **तिजेर्दीर्घश्च ॥ १८ ॥** तीक्ष्णम्॥ **श्लिषेरच्चोपधायाः ॥ १९ ॥** श्लक्ष्णम्॥ **यजिमनिशुन्धिदसिजनिभ्यो युच् ॥ २० ॥** यज्युरध्वर्युः।" मन्युर्दैन्ये क्रतौ क्रुधि"। शुन्ध्युरग्निः। दस्युस्तस्करः। जन्युः—शरीरी॥ **भुजिमृङ्भ्यां युक्त्युकौ ॥२१॥** भुज्युर्भोजनम्।मृत्युः॥ **सर्तेरयुः॥२२॥**सरयुर्नदी।अयूरिति पाठान्तरम्—सरयूः॥**पानीविषिभ्यः पः॥२३॥** पाति रक्षत्यस्मादात्मानमिति—पापम्। तद्योगात्पापः। नेपः—पुरोहितः। बाहुलकाद्गुणाभावे—**नीपो** वृक्षविशेषः। वेष्पः—पानीयम्॥ **च्युवः किच्च ॥२४॥** च्युपः—वक्त्रम्॥ **स्तुवो दीर्घश्च॥२५॥**स्तूपः—समुच्छ्रायः॥**सुशॄभ्यां निच्च ॥२६॥**चात्कित्। सूपः। बाहुलकादूत्त्वम्—शूर्पम्॥ **कुयुभ्यां च ॥ २७ ॥** कुवन्ति मण्डूका अस्मिन्—कूपः। बध्नन्त्यस्मिन्पशुमिति—यूपो—यज्ञस्तम्भः॥**खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः॥२८॥**

सप्तैते पप्रत्ययान्ता निपात्यन्ते । खनतेर्नकारस्य षत्वम्--खष्पौ--क्रोधबलात्कारौ । शीलतेर्ह्रस्वः--शिल्पं--कौशलम् । ( शसु हिंसायाम् )--निपातनात्षत्वम्--शष्पं--बालतृणं, प्रतिभाक्षयश्च । बाधतेः षः--"बाष्पो--नेत्रजलोष्मणोः", बाष्पं च । रौतेर्दीर्घः--"रूपं स्वभावे सौन्दर्ये"। पृ। पर्पं--गृहं, बालतृणं, पङ्गुपीठं च।(तल प्रतिष्ठाकरणे)--चुरादिणिचो लुक्--"तल्पं शय्याट्टदारेषु"॥**स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् ॥ २९ ॥** अयामन्तेति णेरयादेशः । स्तनयित्नुः । हर्षयित्नुः । पोषयित्नुः । गदयित्नुर्वावदूकः । मदयित्नुर्मदिरा। **कृहनिभ्यां क्त्नुः ॥ ३० ॥** कृत्नुः शिल्पी । हत्नुर्व्याधिः, शस्त्रं च ॥ **गमेः सन्वच्च ॥३१॥** जिगत्नुः ॥ **दाभाभ्यां नुः॥३२॥**दानुर्दाता।भानुः॥**वचेर्गश्च॥३३॥** वग्नुः ॥ **धेट इच्च ॥३४॥** धयति सुतानिति--धेनुः ॥ **सुवः कित् ॥३५॥** "सूनुः पुत्रेऽनुजे रवौ" **जहातेर्द्वे अन्तलोपश्च॥३६॥**जह्नुः॥**स्थो णुः ॥३७॥** "स्थाणुः कीले स्थिरे हरे" ॥ **अजिवृरीभ्यो निच्च ॥३८॥**अजेर्वी--वेणुः । वर्णुर्नददेशभेदयोः । "रेणुर्द्वयोः स्त्रियां धूलिः"॥**विषेः किच्च॥३९॥**विष्णुः॥**कृदाधाराचिकलिभ्यः कः॥४०॥**बाहुलकान्न कस्येत्संज्ञा।कर्कः--धवलघोटकः।दाकः--दाता। धाकः--अनड्वानाधारश्च।राका--पौर्णमासी । अर्कः ।"कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि" ॥ **सृवृभूशुषिमुषिभ्यः कक्॥४१॥**"सृक उत्पलवातयोः"।"वृकः श्वापदकाकयोः"।भूकं--छिद्रम् ।शुष्कः ।मुष्कः अण्डम्॥**शुकवल्कोल्काः॥४२॥**शुभेरन्त्यलोपः--शुकः।"वल्कं वल्कलमस्त्रियाम्" ॥ (उष दाहे)--षस्य लः--उल्का॥**इण्भीकापाशल्यतिमर्चिभ्यः कन् ॥४३ ॥** "एके मुख्यान्यकेवलाः"।"भेको मण्डूकमेषयोः" इति **विश्वमेदिन्यौ** । काकः।पाकः--शिशुः। शल्कं--शकलम् । अत्कः--पथिकः, शरीरावयवश्च । मर्कः--शरीरवायुः ॥ **नौ हः॥४४॥** जहातेः कन् स्यान्नौ । निहाका--गोधिका ॥ **नौ सदेर्डिच्च ॥ ४५ ॥**"निष्कोऽस्त्री हेम्नि, तत्पले"॥**स्यमेरीट् च ॥४६॥**स्यमीकः--वल्मीकः, वृक्षभेदश्च। इट् ह्रस्व इति केचित् स्यमिकः ॥ **अजियुधुनीभ्यो दीर्घश्च ॥४७॥** "वीकः स्याद्वातपक्षिणोः" । यूका। धूकः--वायुः । नीकः--वृक्षविशेषः । **ह्रियो रश्च लो वा ॥ ४८ ॥** "ह्रीका ह्लीका त्रपा मता"॥**शकेरुनोन्तोन्त्युनयः॥४९॥**उन, उन्त, उन्ति, उनि, एते चत्वारः स्युः।शकुनः, शकुन्तः, शकुन्तिः, शकुनिः ॥ **भुवो झिच्॥ ५०॥** भवन्तिर्वर्तमानकालः । बाहुलकादवेश्च--**अवन्तिः**--वदेर्वदन्तिः, "किंवदन्ती जनश्रुतिः"॥**कन्युच् क्षिपेश्च ॥५१॥** चाद्भुवः।क्षिपण्युः--वसन्त इत्युज्ज्वलदत्तः।"भुवन्युः स्वामिसूर्ययोः" ॥ **अनुङ् नदेश्च ॥५२॥**चात्क्षिपेः।नदनुः--मेघः । क्षिपणुः--वातः॥ **कॄवृदारिभ्य उनन् ॥ ५३ ॥**"करुणो--वृक्षभेदः स्यात्करुणा च, कृपा मता"।वरुणः । दारुणम्॥**त्रोरश्च लो वा॥ ५४ ॥** तरुणः, तलुनः--युवा ॥ **क्षुधिपिशिमिथिभ्यः कित् ॥५५॥** क्षुधुनः म्लेच्छजातिः । पिशुनः। मिथुनम्॥**फलेर्गुक् च ॥५६॥**फल्गुनः--पार्थः।प्रज्ञाद्यण्--फाल्गुनः।**अशेर्लश्च ॥५७॥**

लशुनम् ॥ **अर्जेर्णिलुक् च**॥५८॥अर्जुनः॥**तृणाख्यायां चित्**॥५९॥चित्त्वादन्तोदात्तः। अर्जुनं—तृणम् ॥ **अर्तेश्च**॥६०॥अरुणः ॥ **अजियमिशीङ्भ्यश्च** ॥ ६१ ॥ वयुनं—देवमन्दिरम्।यमुना।शयुनः—अजगरः॥**वृतृवदिहनिकमिकषिभ्यः सः**॥६२॥ वर्सम् । तर्सम्, "तर्षः प्लवसमुद्रयोः"। वत्सः, वत्सम्—वक्षः। हंसः। "कंसोऽस्त्री पानभाजनम्"। कक्षं नक्षत्रम् । **प्लुषेरच्चोपधायाः** ॥ ६३ ॥ प्लक्षः॥**मनेर्दीर्घश्च**॥६४॥मांसम्॥ **अशेर्देवने**॥६५॥अक्षः॥**स्नुव्रश्चिकृत्यृषिभ्यः कित्**॥६६॥स्नुषा । वृक्षः । कृत्समुदकम् । ऋक्षं—नक्षत्रम् ॥ **ऋषेर्जातौ** ॥ ६७ ॥ "ऋक्षोऽद्रिभेदे भल्लूके" इति च ॥ **उन्दिगुधिकुषिभ्यश्च** ॥६८॥ उत्सः—प्रस्रवणम् । गुत्सः—स्तबकः । कुक्षः—जठरम् ॥ **गृधिपण्योर्दकौ च**॥६९॥गृत्सः—कामदेवः।पक्षः।**अशेः सरः**॥७०॥अक्षरम्॥**वसेश्च** ॥७१॥वत्सरः ॥ **सम्पूर्वाच्चित्** ॥ ७२ ॥ संवत्सरः ॥ **कृधूमदिभ्यः कित्**॥७३॥ बाहुकान्न षत्वम् । "कृसरः स्यात्तिलौदनम्"। धूसरः। मत्सरः। "मत्सरा मक्षिका ज्ञेया भम्भराली च सा मता" ॥ **पतेः रश्च लः**॥७४॥पत्सलः—पन्थाः ॥ **तन्यृषिभ्यां क्सरन्** ॥ ७५ ॥ तसरः—सूत्रवेष्टने। ऋक्षरः—ऋत्विक् ॥ **पीयुक्वणिभ्यां कालन्ह्रस्वः सम्प्रसारणं च**॥७६॥ ( पीयुः सौत्रः )—पियालः—वृक्षभेदः । कुणालः—देशभेदः॥**कटिकुषिभ्यां काकुः**॥७७॥कटाकुः पक्षी। कुषाकुरग्निः, सूर्यश्च ॥ **सर्तेर्दुक् च** ॥ ७८ ॥ "सृदाकुर्वातसरितोः" ॥ **वृतेर्वृद्धिश्च** ॥ ७९ ॥ वार्ताकुः । बाहुलकादुकारस्य अत्त्वम्—वार्ताकम् ॥ **पर्देर्नित्संप्रसारणमल्लोपश्च** ॥ ८० ॥ "पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे"॥ **सृयुवचिभ्योऽन्युजागूजक्नुचः**॥८१॥अन्युच्, आगूच्, अक्नुच्, एते क्रमात्स्युः। "सरण्युर्मेघवातयोः"।यवागूः। "वचक्नुर्विप्रवाग्मिनोः"॥**आनकः शीङ्भियः**॥८२॥शयानकः—अजगरः।भयानकः॥**आणको लूधूशिङ्घिधाञ्भ्यः**॥८३॥लवाणकं—दात्रम् । धवाणकः—वातः । शिङ्घाणकः—श्लेष्मा । पृषोदरादित्वात्पक्षे कलोपः—"शिङ्घाणं नासिकामले" । धाणकः—दीनारभागः॥**उल्मुकदर्विहोमिनः**॥८४॥ (उष दाहे) षस्य—लः, मुकप्रत्ययश्च । उल्मुकं—ज्वलदङ्गारम् ॥ दृणातेर्विः—दर्विः ॥ जुहोतेर्मिनिः—होमी ॥ **ह्रियः कुक् रश्च लो वा** ॥ ८५ ॥ ह्रीकुः, ह्लीकुः—लज्जावान् ॥ **हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्** ॥ ८६ ॥ दशभ्यः—तन् स्यात् । तितुत्रेति नेट्—हस्तः । मर्तः । गर्तः । एतः—कर्बुरः । वातः । अन्तः । दन्तः । "लोतः स्यादश्रुचिह्नयोः"। "पोतो बालवहित्रयोः"। धूर्तः।बाहुलकात्—सेर्दीर्घश्च—तूस्तं—पापं, धूलिर्जटा च॥**नञ्याप इट् च** ॥ ८७ ॥ नापितः ॥ **तनिमृङ्भ्यां किच्च** ॥ ८८ ॥ ततम् । मृतम् ॥ **अञ्जिघृसिभ्यः क्तः** ॥ ८९ ॥ अक्तम् । घृतम् । सितम् ॥ **दुतनिभ्यां दीर्घश्च**॥९०॥दूतः। तातः॥**जेर्मूट् चोदात्तः**॥९१॥जीमूतः॥**लोष्टपलितौ** ॥९२॥ लुनातेः क्तः—तस्य सुट्—धातोर्गुणः—लोष्टम् । पलितम् ॥ **ह्रश्याभ्यामितन्** ॥ ९३ ॥ हरितश्येतौ—वर्णभेदौ ॥ **रुहे रश्च लो वा**॥९४॥ "रोहितो मृगमत्स्ययोः" "लोहितं—

रक्तम् ॥ **पिशेः किच्च** ॥ ९५ ॥ पिशितं मांसम् ॥ **श्रुदक्षिस्पृहिगृहिभ्य आय्यः** ॥ ९६ ॥ श्रवाय्यः—यज्ञपशुः । दक्षाय्यः—गरुडो, गृध्रश्च । स्पृहयाय्यः । गृहयाय्यः—गृहस्वामी ॥ **दिधिषाय्यः** ॥ ९७ ॥ दधातेर्द्वित्वमित्वं षुक् च । "मित्र इव यो दिधिषाय्योऽभूत्" ॥ **वृञ एण्यः** ९८ वरेण्यः ॥ **स्तुवः क्सेय्यश्छन्दसि** ॥ ९९ ॥ स्तुषेय्यं—पुरुवर्चसम् ॥ **राजेरन्यः** ॥ १०० ॥ राजन्यः—वह्निः ॥ **शॄरम्योश्च** ॥ १०१ ॥ शरण्यम् । रमण्यम् ॥ **अर्तेर्निच्च** ॥ १०२ ॥ अरण्यम् ॥ **पर्जन्यः** ॥ १०३ ॥ ( पृषु सेचने )—षस्य जः—" पर्जन्यः शक्रमेघयोः " ॥ **वदेरान्यः** ॥ १०४ ॥ " वदान्यस्त्यागिवाग्मिनोः " ॥ **अमिनक्षियजिवधिपतिभ्योऽत्रन्** ॥ १०५ ॥ अमत्रं—भाजनम् । नक्षत्रम् । यजत्रः । वधत्रमायुधम् । पतत्रं—तनूरुहम् ॥ **गडेरादेश्च कः** ॥ १०६ ॥ कडत्रम्, डलयोरेकत्वस्मरणात्—कलत्रम् ॥ **वृञश्चित्** ॥ १०७ ॥ वरत्रा चर्ममयी रज्जुः ॥ **सुविदेः कत्रन्** ॥ १०८ ॥ सुविदत्रं—कुटुम्बकम् ॥ **कृतेर्नुम् च** ॥ १०९ ॥ कृन्तत्रं—लाङ्गलम् ॥ **भृमृदृशियजिपर्विपच्यमितमिनमिहर्यैभ्योऽतच्** ॥ ११० ॥ दशभ्योऽतच् स्यात् । भरतः । मरतः—मृत्युः । " दर्शतः सोमसूर्ययोः " । यजतः—ऋत्विक् । पर्वतः । पचतः—अग्निः । अमतः—रोगः । तमतस्तृष्णापरः । नमतः—प्रह्वः । हर्यतः—अश्वः ॥ **पृषिरञ्जिभ्यां कित्** ॥ १११ ॥ पृषतः—मृगो, बिन्दुश्च । रजतम् ॥ **खलतिः** ॥ ११२ ॥ स्खलतेः सलोपः, अतच्प्रत्ययान्तस्य इत्वं च । खलतिः निष्केशशिराः ॥ **शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः** ॥ ११३ ॥ सप्तभ्योऽथः स्यात् । शयथः अजगरः । शपथः । रवथः—कोकिलः । गमथः—पथिकः, पन्थाश्च । वञ्चथः—धूर्त्तः । **वन्दीतिपाठे** वन्दतेर्वन्द्यतेर्वा—वन्दथः—स्तोता, स्तुत्यश्च । जीवथः आयुष्मान् । प्राणथः—बलवान् । बाहुलकात्—**शमिदमिभ्याम्**—"शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः" ॥ **भृञश्चित्** ॥ ११४ ॥ भरथः—लोकपालः ॥ **रुदिविदिभ्यां ङित्** ॥ ११५ ॥ रोदितीति—रुदथः—शिशुः । वेत्तीति—विदथः ॥ **उपसर्गे वसेः** ॥ ११६ ॥ आवसथः—गृहम् । संवसथः—ग्रामः ॥ **अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच्** ॥ ११७ ॥ त्रयोदशभ्योऽसच् स्यात् । अततीत्यतसः वायुरात्मा च । अवतीत्यवसः राजा, भानुश्च । चमत्यस्मिन्—चमसः—सोमपानपात्रम् । ताम्यत्यस्मिन्—तमसः—अन्धकारः । नमसः—अनुकूलः । "रभसो वेगहर्षयोः" । लभसः धनं, याचकश्च । नभति, नभ्यति वा, नभसः—आकाशः । तपसः—पक्षी, चन्द्रश्च । पतसः—पक्षी । पनसः—कण्टकिफलः । पणसः—पण्यद्रव्यम् । महसं ज्ञानम् ॥ **वेञस्तुट् च** ॥ ११८ ॥ बाहुलकादात्वाभावः—वेतसः ॥ **वहियुभ्यां णित्** ॥ ११९ ॥ वाहसः—अजगरः । यावसः—तृणसङ्घातः ॥ **वयश्च** ॥ १२० ॥ (वय गतौ)—वायसः—काकः ॥ **दिवः कित्** ॥ १२१ ॥ दिवसम्, दिवसः ॥ **कृशॄशलिकलिगर्दिभ्योऽभच्** ॥ १२२ ॥ करभः । शरभः । शलभः । कलभः । गर्दभः ॥ **ऋषिवृषिभ्यां कित्** ॥ १२३ ॥ ऋषभः । वृषभः ॥ **रुषेर्नित्लुष् च** ॥ १२४ ॥ ( रुष हिंसायाम् )—अस्मादभच् नित्कित्स्यात्, लुषादेशश्च ॥ "लुषभो मत्तदन्तिनि" ॥ **रासिवल्लिभ्यां च** १२५ ॥

रासभः । वल्लभः ॥ **जॄविशिभ्यां झच्** ॥ १२६ ॥ जरन्तः—महिषः । वेशन्तः—पल्वलम् ॥ **रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि** ॥१२७॥ रोहन्तः—वृक्षभेदः । नन्दन्तः—पुत्रः । जीवन्तः—औषधम् । प्राणन्तः—वायुः । षित्त्वान्ङीष्—रोहन्ती ॥ **तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च** ॥१२८॥ दशभ्यः—झच् स्यात्स च षित्। तरन्तः—समुद्रः, तरन्ती नौका । भवन्तः—कालः । वहन्तः—वायुः । वसन्तः—ऋतुः । भासन्तः—सूर्यः । साधन्तः—भिक्षुः ॥ गडेर्घटादित्वान्मित्त्वं ह्रस्वः । अयामन्तेति णेरयः-गण्डयन्तः—जलदः । मण्डयन्तः—भूषणम् । जयन्तः—शक्रपुत्रः।नन्दयन्तः-नन्दकः॥**हन्तेर्मुट् हि च** ॥१२९ ॥ हेमन्तः ॥ **भन्देर्नलोपश्च** ॥ १३० ॥ भदन्तः—प्रव्रजितः ॥ **ऋच्छेररः**॥१३१॥ऋच्छरा—वेश्या । बाहुलकात्—**जर्जरझर्झरादयः**॥**अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित्**॥१३२॥षड्भ्योऽरश्चित् स्यात्।अररं—कपाटम् । कमरः—कामुकः । भ्रमरः।चमरः । देवरः।वासरः॥**कुवः क्ररन्**॥१३३॥कुररः—पक्षिभेदः॥**अङ्गिमदिमन्दिभ्य आरन्** ॥१३४॥ अङ्गारः।मदारः—वराहः।मन्दारः॥**गडेः कडू च** ॥ ॥१३५॥ कडारः—पारिजातकः ॥ **शृङ्गारभृङ्गारौ** ॥ १३६॥ शॄभृञ्भ्यामारन्नुम् गुक् ह्रस्वश्च । शृङ्गारः—रसः।"भृङ्गारः कनकालुका" ॥ **कञ्जिमृजिभ्यां चित्** ॥ १३७॥ ( कञ्जिः सौत्रो धातुः )-कञ्जारः—मयूरः॥मार्जारः॥**कमेः किदुच्चोपधायाः** ॥ १३८ ॥ चिदित्यनुवृत्तेरन्तोदात्तः—कुमारः॥**तुषारादयश्च** ॥ १३९॥ तुषारः, कासारः, सहारः—आम्रभेदः ॥ **दीङो नुट् च** ॥ १४०॥ दीनारः—सुवर्णाभरणम् ॥ **सर्तेरपः षुक् च** ॥ ॥१४१॥ सर्षपः ॥ **उषिकुटिदलिकचिखजिभ्यः कपन्** ॥१४२॥ "उषपो वह्निसूर्ययोः" । कुटपः मानभाण्डम् । दलपः—प्रहरणम् । कचपं—शाकपत्रम् । खजपं—घृतम् ॥ **क्वणेः संप्रसारणं च** ॥१४३॥ कुणपम् ॥ **कपश्चाक्रवर्म्मणस्य** ॥ १४४ ॥ स्वरे भेदः॥**विटपपिष्टपविशिपोलपाः** ॥ १४५ ॥ चत्वारोऽमी कपन्प्रत्ययान्ताः । (विट शब्दे )-विटपः ॥ विशतेरादेः पः । प्रत्ययस्य तुट् । षत्वम्—विष्टपं—भुवनम् ॥ विशतेः प्रत्ययादेरित्वम् । विशिपं—मन्दिरम् ॥ **वरतेः संप्रसारणम्** ॥१४६॥ "उलपं कोमलं तृणम्" ॥ **वृतेस्तिकन्** ॥१४७॥ वर्तिका॥**कृतिभिदिलतिभ्यः कित्**॥१४८॥ कृत्तिका । भित्तिका—भित्तिः । लत्तिका-गोधा॥**इष्यशिभ्यां तकन्** ॥ १४९ ॥ इष्टका। अष्टका ॥ **इणस्तशन्तशसुनौ** ॥१५०॥ एतशः—ब्राह्मणः । स एव—एतशाः ॥**वीपतिभ्यां तनन्** ॥१५१॥(वी गत्यादौ )—वेतनम्।पत्तनम्॥**दृदलिभ्यां भः** ॥१५२॥ दर्भः । " दल्भः स्याद्दषिचक्रयोः" ॥ **अर्तिगृभ्यां भन्** ॥ १५३ ॥ अर्भः । गर्भः ॥ **इणः कित्** ॥ १५४ ॥ इभः ॥ **असिसञ्जिभ्यां क्थिन्** ॥ १५५ ॥ अस्थि । सक्थि ॥ **प्लुषिकुषिशुषिभ्यः क्सिः** ॥१५६॥ प्लुक्षिः-वह्निः । कुक्षिः । शुक्षिः-वातः॥ **अशेर्नित्** ॥१५७॥अक्षि ॥**इषेः क्सुः** ॥१५८॥ इक्षुः ॥**अवितॄस्तृतन्त्रिभ्य ईः** ॥१५९॥ "अवीः—नारी रजस्वला" । तरीः—नौः । स्तरीः—धूमः । तन्त्रीः।वीणादेर्गुणः॥ **यापोः किद्द्वे च** ॥ १६० ॥ययीरश्वः । "पपीः स्यात्सोमसूर्ययोः" ॥ **लक्षेर्मुट् च** ॥ ॥ १६१ ॥ लक्ष्मीः ॥ ॥ **इत्युणादिषु तृतीयः पादः** ॥ ३ ॥

१ आदिशब्दोऽत्र सादृश्यार्थः ।

**वातप्रमीः** ॥ १ ॥ वातशब्दे उपपदे प्रपूर्वान्माधातोरीप्रत्ययः, स च कित्। वातप्रमीः–अयं स्त्रीपुंसयोः॥ **ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिन्नुल्यसाऽऽसानुकः** ॥ २ ॥ द्वादशभ्यः क्रमात्स्युः। अर्त्तेः कत्निच् । यण्–"बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः"। तनोतेर्यतुच्–तन्यतुः, वायुः–रात्रिश्च । अञ्जेरलिच्–अञ्जलिः । वनेरिष्णुच्–वनिष्णुः–स्थविरान्त्रम्। अञ्जेरिष्ठच्–अञ्जिष्ठः–भानुः। अर्पयतेरिसन्–अर्पिसः–अग्रमांसम्। मदेः स्यन्–मत्स्यः। अतेरिथिन्–अतिथिः। अङ्गेरुलिः–अङ्गुलिः। कौतेरसः–कवसः। अच–इत्येके–कवचम्। यौतेरासः–यवासः–दुरालभा । कृशेरानुक्–कृशानुः ॥ **श्रः करन्** ॥ ३ ॥ उत्तरसूत्रे किद्ग्रहणादिह ककारस्य नेत्त्वम्–शर्करा ॥ **पुषः कित्** ॥ ४ ॥ पुष्करम् ॥ **कलश्च** ॥५॥ पुष्कलम् ॥ **गमेरिनिः** ॥६॥ गमिष्यतीति–गमी॥ **आङि णित्**॥७॥ आगामी॥ **भुवश्च** ॥ ८ ॥ भावी ॥ **प्रे स्थः** ॥ ९ ॥ प्रस्थायी ॥ **परमे कित्** ॥ १० ॥ परमेष्ठी ॥ **मन्थः** ॥११॥ मन्थतेरिनिः कित्स्यात्। कित्त्वान्नकारलोपः–मन्थाः–मन्थानौ–मन्थानः॥ **पतस्थ च** ॥ १२ ॥ पन्थाः, पन्थानौ ॥ **खजेराकः** ॥ १३ ॥ खजाकः–पक्षी ॥ **बलाकादयश्च** ॥ १४ ॥ बलाका। शलाका। पताका ॥ **पिनाकादयश्च** ॥ १५ ॥ पातेरित्वं, नुम् च–"क्लीबपुंसोः पिनाकः स्याच्छूलशङ्करधन्वनोः" ( तड आघाते )–तडाकः ॥ **कषिदूषभ्यामीकन्** ॥१६॥ कषीका–पक्षिजातिः। "दूषीका–नेत्रयोर्मलम्" ॥ **अनिहृषिभ्यां किच्च** ॥१७॥ अनीकम्। हृषीकम्॥ **चङ्कणःकङ्कणश्च**॥१८॥ ( कण शब्दे )–अस्माद्यङ्लुगन्तादीकन्, धातोः कङ्कणादेशश्च। "घण्टिकायां कङ्कणीका सैव प्रतिसरापि च" ॥ **सृपृवृञां द्वे रुक्चाऽभ्यासस्य**॥ १९॥ शर्शरीकः–हिंस्रः। पर्परीकः–दिवाकरः। वर्वरीकः–कुटिलकेशः॥ **फर्फरीकादयश्च** ॥२०॥ (स्फुर स्फुरणे) अस्मादकिन्, धातोः फर्फरादेशः–"फर्फरीकं किसलयम्" दर्दरीकं–वादित्रम्। झर्झरीकं–शरीरम्। तित्तिडीकः वृक्षभेदः। चरेर्नुम् च–चञ्चरीकः–भ्रमरः। मर्मरीकः–हीनजनः। कर्करीका–गलन्तिका। पुणतेः–पुण्डरीकं–वादित्रम्, पुण्डरीकः व्याघ्रोऽग्निर्दिग्गजश्च॥ **ईषेः किद्ध्रस्वश्च**॥२१॥ इषीका–शलाका ॥ **ऋजेश्च** ॥ २२ ॥ ऋजीकः–उपहतः ॥ **सर्तेर्नुम् च** ॥ २३ ॥ सृणीका–लाला॥ **मृडः कीकन्कङ्कणौ** ॥ २४ ॥ मृडीकः–मृगः। मृडङ्कणः शिशुः ॥ **अलीकादयश्च** ॥२५॥ कीकन्नन्ता निपात्यन्ते। (अल भूषणादौ) अलीकं–मिथ्या, विपूर्वाद्–व्यलीकं–विप्रियं खेदश्च, वलीकं–पटलप्रान्ते इत्यादि ॥ **कृतॄभ्यामीषन्** ॥२६॥ करीषः–अस्त्री शुष्कगोमये। तरीषः। तरीता॥ **शॄपॄभ्यां किच्च**॥२७॥ शिरीषः। पुरीषम्॥ **अर्जेर्ऋज च** ॥ २८ ॥ "ऋजीषं पिष्टपचनम्" ॥ **अम्बरीषः** ॥ २९ ॥ अयं निपात्यते। ( अबि शब्दे )–"अम्बरीषः पुमान् भ्राष्ट्रम्"। अमरस्तु "क्लीबेऽम्बरीषं भ्राष्ट्रो ना" ॥ **कॄशॄपॄकटिपटिशौटिभ्य ईरन्**॥३०॥ करीरः वंशाङ्कुरः। शरीरम् । परीरं–फलम्। कटीरः–कन्दरो, जघनप्रदेशश्च। पटीरः–चन्दनः

१–२–३–४ आदिशब्दस्त्वादर्शे ।

कण्टकः, कामश्च । " शौटीरस्त्यागिवीरयोः " ब्राह्मणादित्वात् ष्यञ्-शौटीर्यम् ॥ **वशेः कित्** ॥ ३१ ॥ उशीरम्॥ **कशेर्मुट् च**॥३२॥कश्मीरः-देशः॥**कुञ्ज उच्च** ॥३३॥ कुरीरं-मैथुनम्॥ **घसेः किच्च** ॥ ३४ ॥ क्षीरम् ॥ **गभीरगम्भीरौ** ॥ गमेर्भः, पक्षे नुम् च-गम्भीरः॥**विषा विहा**॥३५॥स्यतेर्जहातेश्च विपूर्वाभ्यामामत्ययः।विषा-बुद्धिः। विहा-स्वर्गः । **अव्यये इमे** ॥ **पच एलिमच्** ॥३६॥पचेलिमः-वह्निरव्योः॥**शीङो धुक्लक्वलञ्वालनः**॥३७॥चत्वारः प्रत्ययाः स्युः । शीधु-मद्यम् । शीलं-स्वभावः । शैवलः-शेवालम् । बाहुलकाद्दस्य पोपि-"शेवालं शैवलो न स्त्री शेपालो जलनीलिका" ॥ **मृकणिभ्यामूकोकणौ** ॥३८॥ मरूकः मृगः। काणूकः-काकः॥ **वलेरूकः** ॥३९॥ वलूकः-पक्षी, उत्पलमूलं च॥ **उलूकादयश्च** ॥४०॥ वलेः संप्रसारणमूकश्च । "उलूकाविन्द्रपेचकौ" । वावदूकः वक्ता । भल्लूकः ॥ **शमेर्बुकच**॥४१॥शम्बूकः-जलशुक्तिः॥ **शलिमण्डिभ्यामूकण्**॥४२॥ शालूकं कन्दविशेषः । मण्डूकः॥ **नियो मिः**॥४३॥ नेमिः ॥ **अर्तेरूच्च**॥४४॥ऊर्मिः ॥ **भुवः कित्** ॥ ४५॥भूमिः॥**अश्नातेरश्च**॥४६॥ रश्मिः-किरणो, रज्जुश्च॥**दल्मिः** ॥४७॥( दल विशरणे )-दल्मिरिन्द्रायुधम्॥**वीज्याज्वरिभ्यो निः** ॥४८ ॥ बाहुलकाण्णत्वम्-"वेणिः स्यात्केशविन्यासः प्रवेणी च स्त्रियामुभे " । ज्यानिः। जूर्णिः ॥ **सृवृषिभ्यां कित्** ॥४९ ॥ सृणिरङ्कुशः । "वृष्णिः-क्षत्रियमेषयोः" ॥ **अङ्गेर्नलोपश्च** ॥५०॥ अग्निः ॥ **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** ॥ ५१ ॥ वह्निः । श्रेणिः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः।हानिः। तूर्णिः । बाहुलकाद्-**म्लानिः । घृणिपृश्निपार्ष्णिचूर्णिभूर्णि** ॥५२॥एते पञ्च निपात्यन्ते । घृणिः-किरणः । स्पृशतेः सलोपः-पृश्निरल्पशरीरः । पृषेर्वृद्धिश्च--पार्ष्णिः--पादतलम् । चरेरुपधाया उत्वम्--चूर्णिः--कपर्दकशतम् । बिभर्तेरूत्वम्-भूर्णिर्धरणी ॥ **वृदृभ्यां विन्** ॥ ५३ ॥ र्विः घस्मरः । दर्विः ॥ **जृशॄस्तॄजागृभ्यः क्विन्** ॥५४॥जीर्विः-पशुः। शीर्विः हिंस्रः । स्तीर्विरध्वर्युः । जागृविः नृपः । **दिवो द्वे दीर्घश्चाभ्यासस्य**॥५५॥ "दीदिविः स्वर्गमोक्षयोः" ॥ **कृविघृष्विछविस्थविकिकीदिवि**॥५६॥कृविः-तन्तुवायद्रव्यम् ॥ घृष्विः--वराहः । छास्थोर्ह्रस्वत्वं च। छविः--दीप्तिः--।स्थविः--तन्तुवायः।दीव्यतेः किकीपूर्वात्--किकीदिविः--चाषः । बाहुलकाद्ध्रस्वदीर्घयोर्विनिमयः--"चाषेण किकिदीविना"॥ **पातेर्डतिः** ॥ ५७ ॥ पतिः ॥ **शकेर्ऋतिन्** ॥ ५८ ॥ शकृत् ॥ **अमेरतिः** ॥५९॥ अमतिः--कालः ॥ **वहिवस्यर्तिभ्यश्चित्** ॥ ६०॥ वहतिः--पवनः । "वसतिर्गृहयामिन्योः"। अरतिः--क्रोधः॥**अञ्चेः को वा** ॥६१॥ अङ्कतिः,अञ्चतिर्वातः। **हन्तेरंह च** ॥६२॥ हन्तेरातिः स्यादंहादेशश्च धातोः । हन्ति दुरितमनया--अंहतिः--दानम्।"प्रादेशनं निर्वपणमपवर्जनमंहतिः"॥**रमेर्नित्**॥६३॥रमतिः--कालकामयोः॥**सूङः क्रिः**॥६४॥सूरिः॥**अदिशदिभूशुभिभ्यः क्रिन्** ॥६५॥ अद्रिः । शद्रिः--शर्करा । भूरि--प्रचुरम् । शुभ्रिः--ब्रह्मा ॥ **वङ्क्र्यादयश्च** ॥६६॥ क्रिन्नन्ता निपात्यन्ते।वङ्क्रि-

१-२ आदिशब्दस्यादर्शे ।

वाद्यभेदो, गृहदारुपार्श्वास्थि चावमिः-क्षेत्रम्।"अंह्रिरङ्घ्रिश्च चरणः"।(तदिः सौत्रो धातुः)-तन्द्रिः--मोहः । बाहुलकाद्भ्रणः--भेरिः ॥ **राशदिभ्यां त्रिप्** ॥६७॥ रात्रिः । शत्रिः--कुञ्जरः ॥ **अदेस्त्रिनिश्च**॥६८ ॥ चात्रिप् । अत्री, अत्रिणौ, अत्रिणः । अत्रिः, अत्री, अत्रयः॥**पतेरत्रिन्**॥६९॥ पतत्रिः--पक्षी ॥ **मृकणिभ्यामीचिः** ॥७० ॥ मरीचिः । कणीचिः--पल्लवो, निनादश्च॥**श्वयतेश्चित्**॥७१॥श्वयीचिः--व्याधिः॥**वेञो डिच्च**॥७२॥ वीचिस्तरङ्गः । नञ्समासे अवीचिः--नरकभेदः ॥ **ऋहनिभ्यामूषन्** ॥७३॥ अरूषः-सूर्यः । हनूषः--राक्षसः ॥ **पुरः कुषन्** ॥७४॥ (पुर अग्रगमने)--पुरुषः॥अन्येषामपीति दीर्घः--पूरुषः **पॄनहिकलिभ्य उषच्** ॥ ७५ ॥ परुषम् । नहुषः । कलुषम् ॥ **पीयेरूषन्** ॥७६॥ (पीय इति सौत्रो धातुः)-पीयूषम् ।बाहुलकाद्गुणे"पेयूषोऽभिनवं पयः"॥ **मस्जेर्नुम् च** ॥ ७७ ॥ मञ्जूषा ॥ **गण्डेश्च**॥७८॥गण्डूषः,गण्डूषा॥**अर्त्तेररुः**॥७९॥ अररुः- शत्रुः । अररू, अररवः॥**कुटः किच्च**॥८०॥ कुटरुः--वस्त्रगृहम् । कित्त्वप्रयोजनं चिन्त्यम्॥ **शकादिभ्योऽटन्** ॥ ८१ ॥"शकटोऽस्त्रियाम्" । ककिर्गत्यर्थः--कङ्कटः-सन्नाहः, देवटः--शिल्पी, करट इत्यादि ॥ **कृकदिकडिकटिभ्योऽम्बच्**॥८२॥करम्बं व्यामिश्रम्। ( कदिकडी सौत्रौ)कदम्बः--वृक्षभेदः।कडम्बः--अग्रभागः।कटम्बः--वादित्रम्॥ **कदेर्णित्पक्षिणि** ॥८३॥ कादम्बः--कलहंसः॥**कलिकर्द्योरमः** ॥८४॥ कलमः।कर्दमः। **कुणिपुल्योः किन्दच्** ॥८५॥ ( कुण शब्दोपकरणयोः )--कुलिन्दः--शब्दः । पुलिन्दः-जातिविशेषः ॥ **कुपेर्वा वश्च** ॥ ८६ ॥ कुपिन्दकुविन्दौ तन्तुवाये ॥ नौ षञ्जेर्घथिन् ॥ निषङ्गथिः--आलिङ्गकः॥**उदृतेश्चित्**॥८७॥उदरथिः--समुद्रः॥**सर्तेर्णिच्च**॥८८॥सारथिः **खर्जिपिञ्जादिभ्य ऊरोलचौ** ॥ ८९ ॥ खर्जूरः । कर्पूरः। वल्लूरं--शुष्कमांसम्॥गिञ्जूलं--कुशवर्तिः ॥ लङ्गेर्वृद्धिश्च--लांगूलम् । कुसूलः । तमेर्बुग्वृद्धिश्च--ताम्बूलम् । शृणातेर्दुग्वृद्धिश्च--शार्दूलः॥**दुक्वोः कुक्च**॥९०॥दुकूलम्। कुकूलम्॥**कुवश्चड् दीर्घश्च**॥९१॥ कूची--चित्रलेखनिका ॥ **समीणः** ॥ ९२ ॥ समीचः--समुद्रः, समीची--हरिणी ॥ **सिवेष्टेरू च** ॥ ९३ ॥ सूचः--दर्भाङ्कुरः, सूची ॥ **शमेर्बन्**॥९४॥ शम्बः--मुसलम्॥ **उल्बादयश्च** ॥ ९५ ॥ बन्नन्ता निपात्यन्ते । ( उच समवाये )--चस्य लत्वं गुणाभावश्च--उल्बः--गर्भाशयः । शुल्बं--ताम्रम् । बिम्बम् ॥ **स्थस्तोऽम्बजबकौ**॥९६॥तिष्ठतेरम्बच् अवक एतौ स्तस्तादेशश्च । "स्तम्बो गुच्छस्तृणादिनः" । स्तबकः--पुष्पगुच्छः ॥ **शाशपिभ्यां ददनौ**॥९७॥ "शादः--जम्बालशष्पयोः"।शब्दः॥**अब्दादयश्च**॥९८॥ अवतीति--अब्दः ॥ **कौतेर्नुम्**॥९९॥कुन्दः॥**वलिमलितनिभ्यः कयन्** ॥१००॥ वलयम् । मलयः । तनयः । **वृह्नोः षुग्दुकौ च** ॥ १०१ ॥ वृषयः-आश्रयः । हृदयम्॥ **मिपीभ्यां रुः** ॥ १०२ ॥ मेरुः । पेरुः--सूर्यः । बाहुलकात् पिबतेरपि--"संवत्सरवपुः पारुः पेरुर्वासीर्दिनमणीः" ॥ **जन्वादयश्च** ॥१०३॥ जत्रु, जत्रुणी। अश्रु, अश्रुणी ॥ **रुशातिभ्यां क्रुन्** ॥ १०४ ॥ रुरुः--मृगभेदः । शातयतीति--शत्रुः। मद्रादौ पाठा

ह्रस्वत्वम् ॥ **जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्तनण्क्निञ्छ वस्यढडटाटचः** ॥ १०५ ॥ जनित्वौ--मातापितरौ। दात्वः--दाता। च्यौत्नः--गन्ता, अण्डजः, क्षीणपुण्यश्च । सृणिः--अंकुशश्चन्द्रः, सूर्यो, वायुश्च । वृशः- आर्द्रकं, मूलकं च। मत्स्यः । षण्ढः। डित्त्वाट्टिलोपः--नमतीति- नटः,--शैलूषः । बिभर्ति भरटः--कुलालो, भृतकश्च ॥ **अन्येभ्योऽपि दृश्यन्ते** ॥ १०६ ॥ पेत्वम्--अमृतम् । भृशम् ॥ **कुसेरुम्भोमेदेताः** ॥ १०७ ॥ कुसुम्भम् । कुसुमम् । कुसीदम् । कुसीतः--जनपदः ॥ **सानसिवर्णसिपर्णसितण्डुलांकुशचषालेल्वलपल्वलधिष्ण्यशल्याः** ॥ १०८ ॥ सनोतेरसिप्रत्यये उपधावृद्धिः--सानसिः--हिरण्यम् । वृञो नुक् च--वर्णसिः--जलम् । पॄ--पर्णसिः जलगृहम् । ( तड आघाते )-तण्डुलाः । ( अकि लक्षणे ) उशच्--अंकुशः । चषेरालच् चषालः--यूपकटकः । इल्वलः--दैत्यभेदः । पल्वलम् । ञिधृषा--ऋकारस्य इकारः । धिष्ण्यम् । शलेर्यः--"वा पुंसि शल्यं शंकुर्ना" ॥ **मूशक्यबिभ्यः क्लः** ॥ १०९ ॥ मूलम् । "शक्लः--प्रियवदे" । अब्लः--रसः। बाहुलकादमेः--अम्लः ॥ **माछाससिभ्यो यः** ॥ ११० ॥ माया । छाया । सस्यम्। बाहुलकात्सुनोतेः--"सव्यं दक्षिणवामयोः" ॥ **जनेर्यक्** ॥ १११ ॥ ( ये विभाषा )--जन्यं--युद्धम्, जाया--भार्या ॥ **अघ्न्यादयश्च** ॥ ११२ ॥ यगन्ता निपात्यन्ते । हन्तेर्यक्, अडागमः, उपधालोपश्च, अघ्न्या--माहेयी, अघ्न्यः--प्रजापतिः । (कनी दीप्तौ)--कन्या। **बवयोरैक्यम्**--वन्ध्या ॥ **स्नामदिपद्यर्त्तिपॄशकिभ्यो वनिप्** ॥ ११३ ॥ स्नावा-रसिकः । मद्वा--शिवः । पद्वा--पन्थाः । अर्वा--तुरङ्गगर्ह्ययोः । पर्वा ग्रन्थिः, प्रस्तावश्च । शक्वा--हस्ती । ङीब्रौ--शक्वरी--अङ्गुलिः ॥ **शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप्** ॥ ११४ ॥ शीवा--अजगरः। क्रुश्वा--सृगालः । रुह्वा--वृक्षः। जित्वा जेता। क्षित्वा--वायुः । सृत्वा--प्रजापतिः । धृत्वा--विष्णुः ॥ **ध्याप्योः संप्रसारणं च** ॥ ११५ ॥ धीवा--कर्मकरः। पीवा--स्थूलः ॥ **अदेर्ध च** ॥ ११६ ॥ अध्वा ॥ **प्र ईरशदोस्तुट् च** ॥ ११७ ॥ प्रेत्वा, प्रशत्त्वा च, सागरः । प्रेत्वरी, प्रशत्वरी च, नदी ॥ **सर्वधातुभ्य इन्** ॥ ११८ ॥ पचिः--अग्निः । तुडिः । तुण्डिः। वलिः। वटिः। यजिः। देवयजिः। काशत इति--काशिः । यतिः । मल्लिः, मल्ली । केलिः। ( मसी परिणामे ) मसिः । बाहुलकाद्गुणः--कोटिः । हेलिः । बोधिः । नन्दिः । कलिः ॥ **हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च** ॥ ११९ ॥ "हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्तितः"। पेषिर्वज्रम् । रोहिः--व्रती । वर्तिः । वेदिः । छेदिः--छेत्ता । कीर्त्तिः ॥ **इगुपधात्कित्** ॥ १२० ॥ कृषिः। ऋषिः। शुचिः। लिपिः । बाहुलकाद्वत्वे--लिबिः । ("तूल निष्कर्षे")--तूलिः, तूली चूर्णिका ॥ **भ्रमेः संप्रसारणं च** ॥ १२१ ॥ भृमिः--वातः। बाहुलकाद्--भ्रमिः ॥ **क्रमितमिशतिस्तम्भामत इच्च** ॥ १२२ ॥ क्रिमिः, संप्रसारणानुवृत्तेः कृमिरपि । तिमिः, मत्स्यभेदः। "शितिर्मेचकशुक्लयोः"। स्तिम्भिः--समुद्रः ॥ **मनेरुच्च** ॥ १२३ ॥ मुनिः ॥

तद्वद्वर्णान्प्रयोजयेत् ॥ २५ ॥ ५ ॥ यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते । नवं
रङ्गाः प्रयोक्तव्याः खे अराँ इव खेदया ॥ २६ ॥ रङ्गवर्णं प्रयुञ्जीरन्नो ग्रसेत्पूर्वमक्षरम्।
दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत् ॥२७॥ हृदये चैकमात्रस्तु अर्धमात्रस्तु मूर्धनि।
नासिकायां तथार्धं च रङ्गस्यैवं द्विमात्रता ॥ २८ ॥ हृदयादुत्करे तिष्ठन्कांस्येन स्वमनु-
स्वरन् । मार्दवं च द्विमात्रं च जघन्वाँ इति निदर्शनम् ॥ २९ ॥ मध्ये तु कम्पयेत्कम्प-
मुभौ पार्श्वौ समौ भवेत् । सरङ्गं कम्पयेत्कम्पं रथीवेति निदर्शनम् ॥ ३० ॥ एवं वर्णाः
प्रयोक्तव्या नाव्यक्ता न च पीडिताः । सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥ ३१॥ गी-
गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः
॥ ३२॥माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः । धैर्यं लयसमर्थं च षडेते पाठका
गुणाः ॥ ३३ ॥ शङ्कितं भीतमुद्घुष्टमव्यक्तमनुनासिकम् । काकस्वरं शिरसि गतं तथा
स्थानविवर्जितम् ॥ ३४ ॥ उपांशु दष्टं त्वरितं निरस्तं विलंबितं गद्गदितं प्रगीतम्।
निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं न तु सानुनास्यम् ॥ ३५ ॥ प्रातः पठेन्नित्य-
मुरःस्थितेन स्वरेण शार्दूलरुतोपमेन । मध्यंदिने कण्ठगतेन चैव चक्राह्वसंकूजितसंनि-
भेन ॥ ३६॥ तारं तु विद्यात्सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम् । मयूरहंसा-
न्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन॥३७॥७॥ अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टा-
शरः स्मृताः । शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ॥३८॥ यमोऽनुनासिका न
ह्रौ नादिनो हझषः स्मृताः । ईषन्नादा यणो जश्च श्वासिनस्तु खफादयः ॥ ३९ ॥ ई-
च्छ्वासांश्चरो विद्याद्गोर्धामैतत्प्रचक्षते । दाक्षीपुत्रः पाणिनिना येनेदं व्यापितं भुवि॥४०॥
छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते
॥ ४१ ॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्म-
लोके महीयते ॥ ४२ ॥ ८ ॥ उदात्तमाख्याति वृत्तोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्धा
उपान्तमध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव ॥ ४३ ॥ उदात्तं प्रदेशिनीं विद्या-
त्प्रचयं मध्यतोऽङ्गुलिम् । निहतं तु कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥ ४४ ॥ अन्तो-
दात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम् । मध्योदात्तं स्वरितं द्व्युदात्तं त्र्युदात्तमिति
नवपदशय्या॥४५॥ अग्निः सोमः प्रवो वीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती । अग्नि-
रित्यन्तोदात्तं सोम इत्याद्युदातं प्रेत्युदात्तं व इत्यनुदात्तं वीर्यं नीचस्वरितम् ॥ ४६ ॥
हविषां मध्योदात्तं स्वरिति स्वरितम् । बृहस्पतिरिति द्व्युदात्तमिन्द्राबृहस्पती इति त्र्यु-
दात्तम् ॥४७॥ अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः । स्वरितः कर्णमूलीयः सर्वास्ये
प्रचयः स्मृतः ॥ ४८ ॥ ९ ॥ चाषस्तु वदते मात्रां द्विमात्रं त्वेव वायसः । शिखी रौति
त्रिमात्रं तु नकुलस्त्वर्धमात्रकम् ॥ ४९ ॥ कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् । न
तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ ५० ॥ सुतीर्थादागतं व्यक्तं स्वाम्नाय्यं

सुव्यवस्थितम् । सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥ ५१ ॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुःस्वर-तोपराधात् ॥ ५२ ॥ अनक्षरमनायुष्यं विस्वरं व्याधिपीडितम् । अक्षताशस्त्ररूपेण वज्रं पतति मस्तके ॥ ५३ ॥ हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम्। ऋग्यजुःसाम-भिर्दग्धो वियोनिमधिगच्छति॥५४॥हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् । ऋग्यजुः-सामभिः पूतो ब्रह्मलोके महीयते ॥५५॥१०॥ शंकरः शांकरीं प्रादाद्दाक्षीपुत्राय धीमते । वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः ॥ ५६ ॥ येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥५७ ॥ येन धौता गिरः पुंसां विमलैः शब्दवारिभिः । तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥ ५८ ॥ अज्ञानान्ध-स्य लोकस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥ ५९ ॥ त्रिनयनमभिमुखनिःसृतामिमां य इह पठेत्प्रयतश्च सदा द्विजः । स भवति धनधान्यपशु-पुत्रकीर्तिमानतुलं च सुखं समश्नुते दिवीतिदिवीति ॥ ६० ॥ ११ ॥ अथ शिक्षामात्मोदा-त्तश्च हकारं स्वराणां यथागीत्यचोस्पृष्टोदात्तं चाषस्तु शंकर एकादश ॥ इति शिक्षा ॥





श्रीः ।

# अथ परिभाषापाठः ।

व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम् ॥ यथोद्देशं संज्ञापरिभाषम् ॥ कार्यकालं संज्ञापरिभाषम् ॥ अनेकान्ता अनुबन्धाः ॥ एकान्ताः अनुबन्धाः ॥ नानुबन्धकृतमनेकाल्त्वम् ॥ नानुबन्धकृतमनेजन्तत्वम् ॥ नानुबन्धकृतमसारूप्यम् ॥ उभयगतिरिह भवति ॥ कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते ॥ यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यंते ॥ निर्दिश्यमानस्यादेशा भवन्ति ॥ यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥ अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् ॥ गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः ॥ अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥ एकयोगनिर्दिष्टानां सह वा प्रवृत्तिस्सह वा निवृत्तिः ॥ एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्तते ॥ भाव्यमानेन सवर्णानां ग्रहणं न ॥ भाव्यमानोऽप्युकारस्सवर्णान् गृह्णाति ॥ वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥ उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥ प्रत्ययग्रहणे चापञ्चम्याः ॥ उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥ स्त्रीप्रत्यये चानुपसर्जने न ॥ संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥ पदाङ्गाधिकारे तस्य च तदन्तस्य च ॥ व्यपदेशिवदेकस्मिन् निमित्तसद्भावात् ॥ ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ॥ व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥ यस्मिन्विधिस्तदादावल्ग्रहणे ॥ सर्वो द्वन्द्वो विभाषैकवद्भवति ॥ सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥ प्रकृतिवदनुकरणं भवति ॥ एकदेशविकृतमनन्यवत् ॥ पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥ पुनःप्रसङ्गविज्ञानात्सिद्धम् ॥ सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ॥ विकरणेभ्यो नियमो बलीयान् ॥ परान्नित्यं बलवत् ॥ शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ शब्दान्तरात्प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ॥ लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः ॥ क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता ॥ यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥ यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥ स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यः ॥ असिद्धं बहिरङ्गमन्तरङ्गे ॥ नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥ अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते ॥ पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न ॥ अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यप् बाधते ॥ वार्णादाङ्गं बलीयो भवति ॥ अकृतव्यूहाः पाणिनीयाः ॥ अन्तरङ्गादप्यपवादो बलीयान् ॥ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ॥

क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते ॥ पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान् ॥ मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान् ॥ अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ॥ प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते ॥ उपजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधत इति ॥ अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ॥ अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥ ताच्छीलिकेषु वासरूपविधिर्नास्ति ॥ क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ॥ लादेशेषु वासरूपविधिर्नास्ति ॥ उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ॥ विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥ सूत्रे लिङ्गवचनमतन्त्रम् ॥ नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थावगतिः ॥ गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥ सांप्रतिकाभावे भूतपूर्वगतिः ॥ बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ चानुकृष्टं नोत्तरत्र ॥ स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥ निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम् ॥ तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणम् ॥ क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते ॥ समासान्तविधिरनित्यः ॥ सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ संनियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ॥ ताच्छीलिके णेऽणकृतानि भवन्ति ॥ धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ॥ तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥ प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ॥ अङ्गवृत्ते पुनर्वृत्तावविधिः ॥ संज्ञापूर्वकविधेरनित्यत्वम् ॥ आगमशास्त्रमनित्यम् ॥ गणकार्यमनित्यम् ॥ अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ॥ नञ्घटितमनित्यम् ॥ आतिदेशिकमनित्यम् ॥ सर्वविधिभ्यो लुग्विधिरिड्विधिश्च बलवान् ॥ प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ विधौ परिभाषोपतिष्ठते नानुवादे ॥ उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ अन्त्यविकारेऽन्त्यसदेशस्य ॥ नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे ॥ प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः ॥ अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ॥ विधिनियमसंभवे विधिरेव ज्यायान् ॥ सामान्यातिदेशे विशेषानतिदेशः ॥ प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम् ॥ सहचरितासहचरितयोस्सहचरितस्यैव ग्रहणम् ॥ श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान् ॥ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥ गामादाग्रहणेष्वविशेषः ॥ प्रत्येकं वाक्यपरिसमाप्तिः ॥ क्वचित्समुदायेऽपि ॥ अभेदका गुणाः ॥ बाधकान्येव निपातनानि ॥ पर्जन्यवल्लक्षणप्रवृत्तिः ॥ लक्ष्ये लक्षणं सकृदेव प्रवर्तते ॥ निषेधाश्च

बलीयांसः ॥ अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ॥ योगविभागादिष्टसिद्धिः ॥ पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ॥ ज्ञापकसिद्धं न सर्वत्र ॥ पूर्वत्रासिद्धीयमद्वित्वे ॥ एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥ संप्रसारणं तदाश्रयं च कार्यं बलवत् ॥ क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥ औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥ श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ॥ यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ पदगौरवाद्योगविभागो गरीयान् ॥ अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ॥

इति परिभाषापाठः समाप्तः ॥ शुभं भूयात् ॥



॥ श्रीः ॥

# सिद्धान्तकौमुद्या अकारादिक्रमेण सूत्रसूची[1]



१ (*) एवं चिह्नितानि सिद्धान्तकौमुद्यामुत्तरार्धस्थानि अन्यानि पूर्वार्धस्थानि सूत्राणि

| पृष्ठम् | सूत्रम् | | | |
|---|---|---|---|---|
| *२० | अतोल्रान्तस्य | ७ | २ | २ |
| *१० | अतोहलादेर्लघोः | ७ | २ | ७ |
| *३ | अतोहेः | ६ | ४ | १०५ |
| ६९ | अत्यन्तसंयोगे च | २ | १ | २९ |
| *७३ | अत्रलोपोभ्यासस्य | ७ | ४ | ५८ |
| ११ | अत्रानुनासिकः पूर्वस्य० | ८ | ३ | २ |
| ११२ | अत्रिभृगुकुत्सवसिष्ठ० | २ | ४ | ६५ |
| ३९ | अत्वसंतस्यचाधातोः | ६ | ४ | १४ |
| *६१ | अत्स्मृदृत्वरप्रथम्रद० | ७ | ४ | ९५ |
| *३७ | अदः सर्वेषाम् | ७ | ३ | १०० |
| *३२ | अदभ्यस्तात् | ७ | १ | ४ |
| ५ | अदर्शनं लोपः | १ | १ | ६० |
| ४१ | अदसऔसुलोपश्च | ७ | २ | १०७ |
| ९ | अदसोमात् | १ | १ | १२ |
| ३८ | अदसोसेर्दादुदोमः | ८ | २ | ८० |
| *३७ | अदिप्रभृतिभ्यः शपः | २ | ४ | ७२ |
| १२२ | अदूरभवश्च | ४ | २ | ७० |
| ३ | अदेङ्गुणः | १ | १ | २ |
| *१२१ | अदोजग्धिर्ल्यप्तिकिति | २ | ४ | ३६ |
| *११४ | अदोनन्ने | ३ | २ | ६८ |
| ७७ | अदोनुपदेशे | १ | ४ | ७० |
| २८ | अद्भुतरादिभ्यःपञ्च० | ७ | १ | २५ |
| *१७१ | अद्भिः संस्कृतम् | ४ | ४ | १३४ |
| १५८ | अद्यश्वीनावष्टब्धे | ५ | २ | १३ |
| १३ | अधः शिरसीपदे | ८ | ३ | ४७ |
| १६१ | अधिकम् | ५ | २ | ७३ |
| ६३ | अधिकरणवाचिनश्च | २ | ३ | ६८ |
| ७० | अधिकरणवाचिनाच | २ | २ | १३ |
| १६९ | अधिकरणविचालेच | ५ | ३ | ४३ |
| *१६२ | अधिकरणे बंधः | ३ | ४ | ४१ |
| *११० | अधिकरणेशेतेः | ३ | २ | १५ |
| ९१ | अधिकरणैतावत्त्वे च | २ | ४ | १५ |
| १३५ | अधिकृत्यकृतेग्रन्थे | ४ | ३ | ८४ |
| ५७ | अधिपरीअनर्थकौ | १ | ४ | ९३ |
| ६५ | अधिरीश्वरे | १ | ४ | ९७ |
| ५६ | अधिशीङ्स्थासांकर्म | १ | ४ | ४६ |
| ६२ | अधीगर्थदयेशांकर्मणि | २ | ३ | ५२ |
| *१०० | अधीष्टे च | ३ | ३ | १६६ |
| १६८ | अधुना | ५ | ३ | १७ |
| *८८ | अधेःप्रसहने | १ | ३ | ३३ |
| *२०९ | अधेरुपरिस्थम् | ६ | २ | १८८ |
| ९० | अध्ययनतोविप्रकृष्टा० | २ | ४ | ५ |
| १४८ | अध्यर्धपूर्वाद्विगोर्लुक् | ५ | १ | २८ |
| *१५८ | अध्यायन्यायोद्याव० | ३ | ३ | १२२ |
| १६० | अध्यायानुवाकयोर्लुक् | ५ | २ | ६० |
| १४४ | अध्यायिन्यदेशका० | ४ | ४ | ७१ |
| १३४ | अध्यायेष्वेवर्षेः | ४ | ३ | ६९ |
| १५८ | अध्वनोयत्खौ | ५ | २ | १६ |
| *१९४ | अध्वर्युकषाययोर्जातौ | ६ | २ | १० |
| ९० | अध्वर्युक्रतुरनपुंसकम् | २ | ४ | ४ |
| ११२ | अन् | ६ | ४ | १६७ |
| ४६ | अनउपधालोपिनो० | ४ | १ | २८ |
| २१ | अनङ्सौ | ७ | १ | ९३ |
| ४ | अनचिच | ८ | ४ | ४७ |
| १७५ | अनत्यन्तगतौक्तात् | ५ | ४ | ४ |
| ७७ | अनत्याधानउरसि० | १ | ४ | ७५ |
| *४ | अनद्यतनेलङ् | ३ | २ | १११ |
| *३ | अनद्यतनेलुट् | ३ | ३ | १५ |
| १६८ | अनद्यतनेर्हिलन्यत० | ५ | ३ | २१ |
| १७६ | अनन्तावसथेतिह० | ५ | ४ | २३ |
| *१८१ | अनन्त्यस्यापिप्रश्ना० | ८ | २ | १०५ |
| ५५ | अनभिहिते | २ | ३ | १ |

१ इदं वार्तिकं वामनेन सूत्रपाठ्यां पठितम् ।

१ इदं वार्तिकं काशिकाकृता सूत्रेषु पठितम् ।

## ध.

| पृष्ठम् | सूत्रम् | |
|---|---|---|
| *७५ | नित्यंकौटिल्येगतौ | ३ । १ । २३ |
| ७१ | नित्यंक्रीडाजीविकयोः | २ । २ । १७ |
| *३ | नित्यंङितः | ३ । ४ । ९९ |
| *१७० | नित्यंछन्दसि | ४ । १ । ४६ |
| *१७८ | नित्यंछन्दसि | ७ । ४ । ८ |
| ८६ | नित्यमसिच्प्रजा० | ५ । ४ । १२२ |
| *१५४ | नित्यंपणःपरिमाणे | ३ । ३ । ६६ |
| *१८७ | नित्यंमन्त्रे | ६ । १ । २१० |
| *७१ | नित्यंस्मयतेः | ६ । १ । ५७ |
| ७७ | नित्यंहस्तेपाणा० | १ । ४ । ७७ |
| १७८ | नित्यमाम्रेडितेडाचि | ६ । १ । १०० |
| १७९ | नित्यवीप्सयोः | ८ । १ । ४ |
| *१२१ | निनदीभ्यांस्नातेः० | ८ । ३ । ८९ |
| *१२४ | निन्दहिंसक्लिशखा० | ३ । २ । १४६ |
| ९ | निपातएकाजनाङ् | १ । १ । १४ |
| *१७५ | निपातस्यच | ६ । ३ । १३६ |
| *२१० | निपातैर्यद्यदिहन्तकु० | ८ । १ । ३० |
| *१५५ | निपानमाहावः | ३ । ३ । ७४ |
| *१६२ | निमूलसमूलयोःकषः | ३ । ४ । ३४ |
| *६० | निरःकुषः | ७ । २ । ४६ |
| *१५२ | निरभ्योःपूल्वोः | ३ । ३ । २८ |
| *२०९ | निरुदकादीनिच | ६ । २ । १८४ |
| *११७ | निर्वाणोऽवाते | ८ । २ । ५० |
| १४१ | निर्वृत्तेऽक्षद्यूतादिभ्यः | ४ । ४ । १९ |
| *१९४ | निवातेवातत्राणे | ६ । २ । ८ |
| *१५३ | निवासचितिशरी० | ३ । ३ । ४१ |
| *१८३ | निव्यभिभ्योऽड्व्य० | ८ । ३ । ११९ |
| १३० | निशाप्रदोषाभ्यांच | ४ । ३ । १४ |
| १७९ | निष्कुलान्निष्कोषणे | ५ । ४ । ६२ |
| ८९ | निष्ठा | २ । २ । ३६ |
| *११६ | निष्ठा | ३ । २ । १०२ |
| *१८७ | निष्ठाचद्व्यजनात् | ६ । १ । २०५ |

| पृष्ठम् | सूत्रम् | |
|---|---|---|
| *११९ | निष्ठायांसेटि | ६ । ४ । ५२ |
| *११६ | निष्ठायामण्यदर्थे | ६ । ४ । ६० |
| *११८ | निष्ठाशीङ्स्विदि० | १ । २ । १९ |
| *२०८ | निष्ठोपमानादन्यत० | ६ । २ । १६९ |
| *२०२ | निष्ठोपसर्गपूर्वमन्य० | ६ । २ । ११० |
| ८९ | निष्प्रवाणिश्च | ५ । ४ । १६० |
| *८८ | निसमुपविभ्योह्वः | १ । ३ । ३० |
| *३४*१८३ | निसस्तपतावना० | ८ । ३ । १०२ |
| *७६ | नीग्वञ्चुस्रंसुध्वंसु० | ७ । ४ । ८४ |
| १ | नीचैरनुदात्तः | १ । २ । ३० |
| १७१ | नीतौचतद्युक्तात् | ५ । ३ । ७७ |
| *७६ | नुगतोऽनुनासिका० | ७ । ४ । ८५ |
| *११८ | नुदविदोन्दत्राघ्रा० | ८ । २ । ५६ |
| ४० | नुम्विसर्जनीयशर्व्य० | ८ । ३ । ५८ |
| २४ | नृच | ६ । ४ । ६ |
| *१९३ | नृचान्यतरस्याम् | ६ । १ । १८४ |
| १२ | नृन्पे | ८ । ३ । १० |
| *९ | नेटि | ७ । २ । ४ |
| *४८ | नेटचलिटिरधेः | ७ । १ । ६२ |
| *११४ | नेड्वशिकृति | ७ । २ । ८ |
| *१७६ | नेतराच्छन्दसि | ७ । १ । २६ |
| ३१ | नेदमदसोरकोः | ७ । १ । ११ |
| ११८ | नेन्द्रस्यपरस्य | ७ । ३ । २२ |
| ९७ | नेन्सिद्धबध्नातिषुच | ६ । ३ । १९ |
| २७ | नेयङुवङ्स्थानावस्त्री | १ । ४ । ४ |
| *२०९ | नेरनिधाने | ६ । २ । १९२ |
| *१० | नेर्गदनदपतपद० | ८ । ४ । १७ |
| १५९ | नेर्बिडज्बिरीसचौ | ५ । २ । ३२ |
| *८६ | नेर्विशः | १ । ३ । १७ |
| *१९२ | नोङ्धात्वोः | ६ । १ । १७५ |
| *२०५ | नोत्तरपदेऽनुदात्ता० | ६ । २ । १४२ |

## ह.

इति सिद्धान्तकौमुदीपृष्ठाङ्कसूत्रसूचीपत्रं समाप्तम् ।



कृतिरियम्-

पण्डितज्वालाप्रसादशर्मणः-दीनदारपुरा-मुरादाबाद.

श्रीगणेशाय नमः ।

# अथ धातूनां मातृकावर्णक्रमेणानुक्रमणिका ।



धातूनाम्—

| धातवः | पृष्ठाङ्काः | धातवः | पृष्ठाङ्काः | धातवः | पृष्ठाङ्काः | धातवः | पृष्ठाङ्काः | धातवः | पृष्ठाङ्काः |
|---|---|---|---|---|---|---|---|---|---|
| वंर्चे | [illegible]२ | विजि | ५२ | वृञ् | ५० | व्यथ | ३० | शमु | ४८ |
| वर्ण | ६१ | विजि | ५६ | वृञ् | ६५ | व्यय | ६९ | शप | ४७ |
| वर्ण | ६९ | विजिर् | ४४ | वृण | ५३ | व्युष | ४९ | शब्द | ६४ |
| वर्ध | ६३ | विट | १५ | वृतु | २५ | व्युष | ४५ | शर्ब | १७ |
| वर्ष | २२ | विडंब | ६९ | वृतु | ४७ | व्येञ् | ३६ | शर्व | २१ |
| वर्ह | २२ | विधृ | ९ | वृतु | ६५ | व्रज | १४ | शल | २० |
| वल | २० | विद | ४१ | वृधु | २५ | व्रज | ६२ | शल | २९ |
| वलि | २७ | विद | ४७ | वृधु | ६५ | व्रण | १९ | शल्भ | १६ |
| बल्क | ६२ | विद | ५६ | वृश | ४९ | व्रण | ६९ | शव | २४ |
| वल्ग | १२ | विद | ६४ | वृष | ६४ | व्रश्चू | ५२ | शश | २४ |
| वल्गु | ८५ | विद्लृ | ५५ | वृषु | २३ | व्री | ५९ | शष | २३ |
| वल्भ | १६ | विध | ५३ | वृहिर् | २४ | व्रीङ् | ४६ | शसु | २४ |
| वल्ल | २० | विल | ५३ | वृहू | ५३ | व्रीडि | ४५ | शंब | ६१ |
| वल्ह | २२ | विल | ६२ | वॄ | ५९ | व्ली | ५९ | शंसु | २४ |
| वश | ४३ | विश | ५५ | वॄञ् | ५९ | **श.** | | शा | ६२ |
| वष | २३ | विष | ६० | वेञ् | ३६ | शक | ४८ | शाखृ | ११ |
| वस् | ३५ | विषु | २३ | वेणृ | ३० | शकि | ११ | शाडृ | १४ |
| वस् | ३८ | विष्लृ | ४५ | वेथृ | ९ | शक्लृ | ५१ | शा[illegible] | ३५ |
| वस | ६५ | विष्क | ६४ | वेद | ८५ | शच | १२ | शासु | २२ |
| वस | ६९ | विष्क | ६९ | वेपृ | १६ | शट | १५ | शासु | ३८ |
| वसु | ४९ | विस | ४९ | वेल | ६७ | शठ | १६ | शासु | ४३ |
| वस्क | ११ | वी | ४० | वेलृ | २० | शठ | ६२ | शिक्ष | २२ |
| वह | ३५ | वीर | ६८ | वेल्ल | २० | शठ | ६४ | शिखि | १२ |
| वंच | १२ | वुगि | १२ | वेष्ट | १४ | शठ | ६७ | शिघि | १२ |
| वा | ४० | वृक | ११ | वेवीङ् | ४३ | शडि | १४ | शिजि | ३८ |
| वाक्षि | २३ | वृक्ष | २१ | वेह्ट | २२ | शण | २६ | शिञ् | ५० |
| वाछि | १३ | वृङ् | २२ | वै | ३१ | शद्लृ | २९ | शिट | १५ |
| वात | ६७ | वृजी | ३८ | व्यच | ५२ | शद्लृ | ५५ | शिल | ५३ |
| वाशृ | ४७ | वृजी | ५६ | व्यय | २५ | शप | ३५ | शिष | २३ |
| वास | ६७ | वृजी | ६५ | व्यय | ४७ | शम | २८ | शिष | ६५ |
| वाह्ट | २२ | | | | | शम | ६३ | | |
| विचिर् | ५६ | | | | | | | | |
| विंच्छ | ५५ | | | | | | | | |
| विच्छ | ६५ | | | | | | | | |

धातूनाम्–

इति धातूनां सूची समाप्ता ।






विद्वज्जनकृपाकांक्षी-

**क्षेमराज श्रीकृष्णदास,**

**"श्रीवेङ्कटेश्वर" यन्त्रालयाध्यक्ष-मुंबई.**

इति

धातूनां मातृकावर्णक्रमे

क्रमणिका समाप्ता

